# जीव ासे ध्वीवि यानुक्र णिका



—*—

## अथ जीवसमासे बृहद्विषयानुक्रमः

इति जीवसमासः

—*—

# श्रीजीवसमासस्योपोद्घातः

सम्मुपादीयतामिदं पूर्वधराचार्यवर्याविहितं यथार्थं जीवसमासाभिधानं प्रकरणं, विवरीतारश्चास्य पूर्वमप्यभुवन् केऽप्याचार्यसिन्धुराः यतः अत एवैनान् पूर्वटीकाकारा इत्थमाहुरित्येवं ४७ गाथावृत्तौ प्रकृतटीकाकाराः स्मरयन्ति, प्रकृता च व्याख्या श्रीमद्भिर्हर्षपुरीयगच्छाम्बरनभोमिणिभिः श्री हेमचन्द्रसूरिभिः प्राणायि, श्रीमन्वो हेमचन्द्रसूरयश्च त एवेमे ये श्रीविशेषावश्यकभाष्यं अनुयोगद्वाराणि च व्याख्यया ऽलंचक्रुः, चक्रुश्च स्वोपज्ञव्याख्यायुतां भवभावनां पुष्पमालां चेति प्रतीतमेव प्रतिभावतां, किंच-श्रीमतां शिष्यवर्येण श्रीश्रीचन्द्राचार्येण विहिते श्रीमुनिव्रसुतचरित्रेऽपि श्रीमतां किंचिद् वृत्तं प्रसाधितं तत् तत एवावधार्यं, श्रीमन्तश्च द्वादशशताब्द्यां वैक्रमीयायां सत्तावन्तः, यतःप्रकृतग्रन्थप्रशस्तौ वीरदेवाचार्यान् श्रीमन्मुनिचन्द्राचार्यांश्च स्मरन्ति एते, ते च द्वादशशताब्दीतः परतो न, किन्तु प्रागेव, यतः श्रीमुनिचन्द्रसूरयो हि सप्तत्यधिकवर्षसहस्रेषु दिवं गताः, किंच श्रीमतां शिष्यवर्याः श्रीश्रीचन्द्राचार्याः श्रीमुनिसुव्रतस्वामिनां चरित्रं त्रिनवत्यधिकैकादशशताब्द्यां चक्रुः, ततोऽपि निस्संशयमेतत् यतः श्रीमन्तो द्वादशशताब्दीभाविनः, आस्तामन्यत्-स्वयमपि च श्रीविशेषावश्यकवृत्तौ 'शरदां च पंचसप्तत्यधिकैकादशशतेष्वतीतेषु । कार्त्तिकसितपंचम्यां श्रीमज्जयसिंहनृपराज्ये ॥१॥' इति श्लोकेन ख्यांति स्वीयां सत्तां द्वादशशताब्द्यां, किंच-श्रीमद्भिर्विवृतेषु कृतेषु च ग्रन्थेषु दशसु विवरणमिदं षष्ठं, अत्र वृत्तौ नास्ति हायनानां संख्यैतद्विधानकालदर्शिका, अन्ये तु चतुष्षष्ट्यधिकान्येकादश शतान्याहुः, सुसंभविच तत्, यतो विशेषावश्यकवृत्तौ "स्वकृतानां ग्रन्थव्रजानामेवं क्रमनिर्देशं व्यधुः पूज्याः- मया परमपुरुषस्योपदेशं श्रुत्वा विरचय्य झटिति निवेशितमावश्यक-

टिप्पनिकाभिधानं सद्भावनामंजूषायां नूतनफलकं, ततोऽपरमपि कविवरणनामकम्, अन्यदपि नुयोगद्वारवृत्तिसंज्ञितं, ततोऽपरमप्युपदेशमालासूत्राभिधानम्, अपरं तु तद्वृत्तिनामकम्, अन्यच्च जीवसमा विवरणनामधयेम्, अन्यत्तु भवभावनासूत्रसंज्ञितम्, अपरं तु ताद्विवरणनामकम् ,अन्यच्च झटिति विरचय्य तस्याः सद्भावनामञ्जूषाया अंगभूतं निवेशितं नन्दिटिप्प मधेयं नूतनदृढफलकम् , एतैश्च नूतनफलकैर्निवेशितैर्वज्रमयीव संजाताऽसौ मंजूषा तेषां पापानामगम्या, ततस्तैरतीव छलघातितया संचूर्णयितुमारब्धं तद्द्वारकपाटसंपुटं, ततो मया ससंभ्रमेण निपुणं तत्प्रतिविधानोपायं चिन्तयित्वा विरचयितुमारब्धं तद्द्वारपिधानहेतोर्विशेषावश्यकविवरणाभिधानं वज्रमयमिव नूतनकपाटसंपुटं, ततश्चाभयकुमारगणि--धनदेवगणि--जिनभद्रगणि--लक्ष्मणगणि--विबुधचन्द्रादिमुनिवृन्दश्रीमहानन्दश्रीमहत्तरावीरमतीगणिन्यादिसाहाय्यात् समस्तमपि विलक्षीभूतं तत्सैन्यं निलीनं च सनायकमेव" स्पष्टं चातो जीवसमासविवरणरूपा षष्ठा कृतिः कृतिनां, किंच-श्रीमतामेतासु दशसु कृतिषु नन्दिवृत्तिटिप्पनकं तावदलभ्यमेव, यतो यल्लभ्यते नन्दिटिप्पनकं तत्तु धर्मघोषाचार्यपादकमलमकरन्दचंचरीकायमानश्रीश्रीचन्द्राचार्यनिर्मितमास्ति न तु श्रीमद्भिः सूत्रितमित्यन्वेष्यमेव मेधाविभिरेतत्, शेषास्तु नवापि कृतयोऽनवा अपि नवा इव जाग्रति जैनशासनामृतरसपीपासितानां, नचेमान्यसंभवीनि पूर्वोक्तानि वर्षाणि अस्यां विधाने यतः सप्तम्या भवभावनायाः कृतिस्तत्प्रस्तावनातः सप्तत्याधिकैकादशसु शतेषु अवसीयते, प्राक् चेदमदृम्भिषुर्विवरणं, ततो यथायथमेतत् , आस्तामनुमानं, स्वयमेव प्रथमादर्शे लिखिता पुस्तिकाऽस्या अस्ति स्तम्भतीर्थे तद्वर्षाङ्कवतीति न संदेहलेशोऽत्र, परं पुष्पमालायाः सविवरणाया एतत्प्राग्निष्पादिताया अपि पंचसप्तत्यधिकैकादशताब्दी उद्घुष्यते सा कथं श्रद्धीयतां ?, विशेषावश्यकक्रमस्य तदन्यथाभूतत्वात्, न चेत् स पाठः क्रमदर्शकस्तदा भवेदेवं, परमस्माकं स क्रमदर्श-

कतया प्रतिभातीति । अवधार्यं तावद्धीधनैर्यदुत जीवसमासाख्यं प्रकरणमिदं पूर्वभृद्भिर्विहितं यत आख्यान्ति प्रकरणकारा उपसं-
हारगाथायां दृष्टिवादगतपदार्थदर्शकतामेतस्य, परं ते सूरिपुङ्गवाः कदा अभूवन् किमभिधानाश्च ते इति न ज्ञायते, परं प्रामाणि-
कप्रकाण्डास्ते इति तु निर्णीयते, यतः ३०-३६-६५-६९-७३-७८-८०-८२-११५-१५३-१५७-१५८-१७५-१८४-१९४-१९७-१९९
प्रभृतिगाथासु पृथ्वीभेदक्रमादीनां सिद्धान्ताभिहितक्रमादेरन्यथात्वेऽपि न टीकाकारेण दूषितान्येतद्ग्रन्थगतानि वाक्यानि, श्री-
विजयसेनसूरिभिः सेनप्रश्नेऽपि द्वितीयोल्लाससत्कद्वाषष्टितमे तुर्योल्लाससत्कद्वादशे च प्रश्ने एतत्प्रकरणगतं वचनमनूदितं मतान्ततर-
तया न तु दूषितं, श्रीविनयविजयोपाध्यायैस्तु लोकप्रकाशे शतशोऽनूदितमेतत् मूलप्रकरणं, यत एवं ततो विसंवादो दृश्यतेऽत्र
बहुषु स्थानेषु सिद्धान्तवाक्यैः सह परं न तत्रानास्था श्रद्धावतां, यतः केवलादिगम्येषु पदार्थेषु अर्वाग्दर्शिभिरन्यतमः सत्यतया
निर्णेतुं शक्यो नेति पदार्थ द्वयमपि व्याख्येयमेवेति । किंच-प्रकरणस्यास्य विवरणादेतस्मात् प्रागप्यभूतां द्वे वृत्ती, यतः श्री-
मद्भिरेव ४७ तमगाथावृत्तौ 'मूलवृत्तिकृते'ति स्पष्टमेवाख्यातं, स्वकृतविवरणमपेक्ष्य स्यात् तस्या वृत्तेर्मूलवृत्तित्वं परं१५८गाथावृत्तौ "ए
तद्गाथायामर्वाचीनटीकाकारः प्राह, तद्यथा-मूलटीकायां न व्याख्याता, अस्माकं त्वयमर्थः प्रतिभासते,-व्याख्यानमर्वाचीनटीकाकार-
कृतं दर्शित" मिति स्पष्टमुल्लेखस्य दर्शनात् अभूतां द्वे वृत्ती अस्य इतः प्राक् इत्यत्र न कोऽपि संदेहः, परं न क्वाप्युपलभ्येते न चोल्लिखिते
अपि अन्यत्र दृश्येते, स्यातां चेत्कस्यापि विदुषःपार्श्वे ज्ञाप्या समितिरियं यतस्तयोरपि यथायथं प्रचारः स्यात् । प्रकरणमिदं सवृत्तिकं
प्राक् श्रीमद्धरगोविंददासोक्त्या कलिकत्तायां मुद्रयितुमारब्धं परं तस्य मुद्रणालयाधिपेन रूप्यकाः प्रचुराः श्रीमद्धरगोविन्ददासैर्दा-
पिता गृहीत्वा न कृतं मुद्रणं पूर्णमिति श्रीजैनबन्धुप्रेसमुद्रणालये पूर्णीकारितमेतदिति पत्रान्यथात्वेऽक्षरद्वैविध्ये चानुपाया वयमिति-

पयन्ति आनन्दसागराः ॥ संवद्वेदाष्टनागेलामितेऽब्दे श्रावणे सिते । तृतीयायां शनौ चक्रुरेनमानन्दसागराः ॥ १ ॥ निरस्य केशरीयाख्ये तीर्थे तीर्थमालिम्लुचः । नग्नान् विघ्नकरान् राजादेशात् दण्डक्रियां व्यधुः ॥ २ ॥ ते निर्बन्धेन सङ्घस्य स्थिता उदयपत्तने । किञ्चिज्जीवसमासस्योपोद्घातं ह्यलिखन्नमुम् ॥ ३ ॥

## शुद्धि पत्रम्

९१ पंक्ति ८—अष्टभिः परमाणु भिरेक ऊर्ध्वरेणुः-भवतीत्यर्थ.

पृष्ठ ९८ पं १३—रत्निस्त्वेक्तो.

९९ पं ८—० तत्वादेव तदिह.

पृष्ठ १०० पंक्ति ८—० विष्कम्भा सहस्राङ्गुलदीर्घा च णाङ लसूची जायते, इद मुक्तं भवति-अर्धतृतीयोत्सेधांगुलविष्कम्भे प्रमाणाङ्गुले तिस्रः-श्रेणयः कल्प्यन्ते एका उत्सेधाङ्गुलेनाङ्गुलविष्कम्भा, शतचतुष्टयदीर्घा च-द्विती.

पृष्ठ १०१ पंक्ति ६—ततः-श्रेण्यादयो भवन्ति तथाहि असंख्येयगुणेन प्रमाणाङ्गुलयोजनैरित्यर्थः- अनु०



## श्रीमन्मलधारिहेमचन्द्रसूरिसूत्रितविवरणयुतः श्रीजीवसमासः

॥ अर्हम् ॥

य स्फारकेवलकरैर्जगता निहत्य, हार्द तम प्रकटिताखिलवस्तुतत्त्व ।
नित्योदित सुरवरै स्तुतपादपद्मोऽपूर्वो रविर्विजयते स जिनेन्द्रवीर ॥ १ ॥
प्रणमामि चरणयुगल तेषा श्रीगौतमादिसूरीणाम् । यैर्जलदैरिव वृष्ट सूत्रजलैर्भव्यवसुधासु ॥ २ ॥
कामधेनुरिवाशेषकामितार्थप्रसाधिनी । या स्तुता सर्वगीर्वाणै, स्तौमि ता श्रुतदेवताम् ॥ ३ ॥
विशेषतश्च नत्वाऽऽत्मगुरूणा पदपङ्कजम् । वृत्ति जीवसमासस्य, वीतविघ्न प्रवच्म्यहम् ॥ ४ ॥

तत्र चायुर्बलमेधादिभिरपचीयमानान् साम्प्रतकालीनजन्तून् समवलोक्य तदनुग्रहार्थमन्यत्र विस्तराभिहितान् जीवगुणस्थानादिकान् भावान् सङ्क्षिप्य प्रतिपादयितु **जीवसमास**सञ्ज्ञित प्रकरण चिकीर्षुराचार्यो नि शेषप्रत्यूहोपशमाय मङ्गलगर्भा प्रेक्षावत्प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनगर्भा च गाथामाह—

**दस चोद्दस य जिणवरे चोद्दसगुणजाणए नमंसित्ता । चोद्दस जीवसमासे समासओऽणुक्कमिस्सामि ॥ १ ॥**

व्याख्या—दश चतुर्दश च जिनवरान्-चतुर्विंशतिसङ्ख्यास्तीर्थकरानित्यर्थ 'नमस्कृत्य' प्रणिपत्य, किमित्याह—'**चोद्दसजीवसमासे**' इत्यादि, जीवाना-समस्तजीवास्तिकायगतानामनन्ताना जन्तूना समासा -सङ्ग्राहका सङ्क्षेपा चतुर्दश च ते जीवसमासाश्च तान् वक्ष्यमाणस्वरूपान् सिद्धान्तमहोदधिभणनापेक्षया

'समासतः' सङ्क्षेपत 'अनुक्रमिष्यामि' भणिष्यामीतिसम्बन्ध, जीवसमासाश्चेह चतुर्दश गुणस्थानान्यवसेयानि, मिथ्यादृष्टिसास्वादनादिभेदतस्तैरपि समस्तजन्तुसङ्ग्रहाद्, एतदेव सूचयतेद विशेषणमकारि, कथम्भूतान् जिनवरान् ?-चतुर्दशगुणान् मिथ्यादर्शनादीन् जानन्तीति चतुर्दशगुणज्ञायकास्तानिति, अन्यथा हि तीर्थकरा समस्तमपि वस्तुनिवह जानन्त्येव, किमनेन निर्द्धार्य चतुर्दशगुणज्ञायकत्वविशेषणेन ?, तस्मादिह प्रकरणे चतुर्दशगुणस्थानरूपा ये जीवसमासा मयाऽभिधास्यन्ते तान् सम्यगशेषविशेषापेतास्तीर्थकरा एव जानन्ति, अह तु तदुक्तानुसारेण सङ्क्षेपत किञ्चित्तान् भणिष्यामीत्येतदेव सूचयतेद विशेषणमुपादायीति स्थित, केवल गुणस्थानान्तर्गतानि तद्ग्रहणप्रक्रमायातानि सूक्ष्मैकेन्द्रियबादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियसञ्ज्ञिपञ्चेन्द्रियरूपाण्यपि जीवसमासस्थानानि प्रत्येक पर्याप्तापर्याप्तभेदभिन्नानि चतुर्दशेहाभिधास्यन्त इत्यवसेयमिति। तदत्र पूर्वार्द्धेन विघ्नव्रातविघाताय तीर्थकरनमस्कारो वर्णित, 'चउदसजीवसमासे' इत्यभिधेयपद, तदनुक्रमण तु प्रयोजनमित्यभिधेयप्रयोजने साक्षादुक्ते, सम्बन्धस्तु प्रकरणप्रयोजनयो साध्यसाधनलक्षण सामर्थ्यादेव गम्यत इति साक्षान्नोक्त, तदुक्तम्-"शास्त्र प्रयोजनं चेति, सम्बन्धस्याश्रयावुभौ। तदुक्तयन्तर्गतस्तस्माद्, भिन्नो नोक्त प्रयोजनात् ॥ १ ॥" अनेन चाभिधेयादिदर्शनेन प्रेक्षावन्त प्रवर्तिता भवन्ति, यदाह—"उक्तार्थं ज्ञातसम्बन्ध, श्रोतु श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्य, सम्बन्ध सप्रयोजन ॥१॥" इति गाथार्थ ॥ १ ॥ केन पुनरुपायेनेते जीवसमासा अनुक्रमणीया ? इत्याह—

**निक्खेवनिरुत्तीहि अट्ठहि याणुओगदारेहि। गइयाइमग्गणाहि य जीवसमासाऽणुगंतव्वा ॥ २ ॥**

व्याख्या—निक्षेपण निक्षेप-समयप्रसिद्धा नामस्थापनेत्यादिनैव चानन्तर वक्ष्यमाणस्वरूप, निश्चितोक्तिर्निरुक्ति, निश्चयेन वोच्यतेऽर्थोऽनयेति निरुक्ति, जीवति जीविष्यति जीवितवानिति जीव इत्यादि शब्दव्युत्पत्तिरित्यर्थ, एताभ्यां निक्षेपनिरुक्तिभ्या 'जीवसमासा' उक्तस्वरूपा 'अनुगन्तव्या' व्याख्येया इति सम्बन्ध, तथाऽनुरूप सूत्रस्यार्थेन योजनमनुयोगो-व्याख्यान तस्य द्वाराणि-उपायभूतानि मुखान्यनुयोगद्वाराणि तानि च "किं कस्स केण कत्थ व" त्यादिना वक्ष्यमाणानि षट् "सतपयपरूवणये" त्यादिना वक्ष्यमाणान्यष्टौ, ते षड्भिरष्टभिश्चानुयोगद्वारैर्जीवसमासा व्याख्येया, मार्गणा-जीवादिवस्तूना सदसत्त्वादिप्रकारेण नरकगत्यादिषु अन्वेषणा

गतीन्द्रियकायादिषु मार्गणा गत्यादिमार्गणास्ताभिश्च जीवसमासा अनुगन्तव्या इति गाथासमासार्थ ॥ २ ॥ विस्तरार्थं द्विभणिषु स्वयमेव सूत्रकारो निक्षेपस्वरूप तावदाह—

**नामठवणा दव्वे भावे य चउव्विहो य निक्खेवो । कत्थइ य पुण बहुविहो तयासयं पप्प कायव्वो ॥ ३ ॥**

व्याख्या—नामस्थापनाद्रव्यभावभेदात्सामान्येन चतुर्विधो निक्षेपो भवति, स च प्रस्तुते इत्थं योज्यते—जीव इति नाममात्र नामजीव, नाम चासौ जीवश्चेतिकृत्वा, यस्य वाऽचेतनस्य (सचेतनस्य वा) वस्तुनो जीव इति नाम क्रियते स नामजीव, नाम्ना-नाममात्रेण जीवो नामजीव इति हेतो, ; चित्रकर्मलेप्यकर्माक्षादिषु स्थाप्यमान स्थापनाजीव, यस्य तु जीवस्यैव सतोऽपि ज्ञानादीन् लेष्ट्वादिव्यावृत्तिप्रभृतीश्च पर्यायानवगणय्य केवल तद्वियुक्त जीवमात्र विवक्ष्यते स: द्रव्यजीवो, गुणपर्यायवैकल्यविवक्षया द्रव्यमात्रत्वात् । अथवाऽनुपयुक्तो जीवो द्रव्यजीव, 'अनुपयोगो द्रव्य' मिति वचनात्, यद्वौदारिकादिशरीरद्रव्येण सह जीवस्यान्योऽन्यानुगतत्वाद् द्रव्यस्य च प्रधानतया विवक्षितत्वाद् द्रव्यभूतो जीवो द्रव्यजीव, यथा भोगी पुरुषोऽपि भोगपुरुष उच्यते एवमौदारिकशरीरादिद्रव्यवान् जीवोऽपि द्रव्यजीव इत्यर्थ:, औदयिकादिभावयुक्तस्तु ज्ञानादिगुणसमन्वितो भावजीव, इह च-" जत्थ य ज जाणिज्जा निक्खेव निक्खिवे निरवसेस । जत्थवि य न जाणिज्जा चउक्कय निक्खिवे तत्थ ॥ १ ॥" इति वचनाद्वस्तुना : निक्षेपो बहुविधोऽपि सभवति, यथा-"नाम ठवणादविए खित्ते काले भवे य भावे य । एसो खलु ओहिस्सा निक्खेवा होइ सत्तविहो ॥ १ ॥" तथा-"नाम ठवणा दविए खित्ते काले भवे य भावे य । पज्जवलोगे य तहा अट्ठविहो लोगनिक्खेवो ॥ १ ॥ नाम ठवणा दविए आहे भव तब्भवे य भोगे य । सजम जस कित्ती जीविय च त भणणाई दसहा ॥ २ ॥" इत्यादि । यत्र पुन प्रज्ञावैकल्यादिकारणाद्बहुविधो निक्षेपो न ज्ञायते तत्रापि नामस्थापनाद्रव्यभावलक्षण चतुष्टय निक्षिपेदेव, तस्य सर्वव्यापकत्वात्सुप्रतीतत्वाच्च, तदेवमत्रापि चतुष्टयनिक्षेप प्रदर्शितोऽथ बहुविधनिक्षेपप्रदर्शनार्थमुत्तरार्द्धमाह—'कत्थइ य पुणे' त्यादि, क्वापि पुनर्वस्तुनि बहुविधो यथासम्भव पञ्चषट्सप्तादिविधोऽपि निक्षेप कर्तव्य:, कि कृत्वा ? इत्याह—

तत्य-निक्षताव्यद्रव्यस्याश्रयो-निक्षेप्यविषय आधारक्षेत्रकालादिस्तं प्राप्य--आश्रित्येति, तथाहि-प्रस्तुते क्षेत्रपर्यादप्रधानो (जीव द्रव्य) जीव आयुष्कादि कालजीव चक्रवर्त्त्या-दिर्भोगजीव गणधरादि सयमजीव इत्यादि स्वमत्याऽभ्यूह्य वाच्यमिति गाथार्थः ॥ ३ ॥ तदेव निक्षेपद्वारेण व्याख्याता जीवसमासा, निरुक्तिस्तु जीवति जीविष्यतीत्यादिना-दर्शितेव, साम्प्रत षडनुयोगद्वारदर्शनार्थमाह—

**किं कस्स केण कत्थ व केवचिरं कइविहो उ भावोत्ति। छहिं अणुओगदारेहि सव्वभावाऽणुगतव्वा ॥ ४ ॥**

एतै किमादिभिरनुयोगद्वारे सर्वेऽपि जीवाजीवादय पदार्था 'अनुगन्तव्या' व्याख्येया, तत जीवपदार्थस्य प्रस्तुतत्वात्स एवेह तावच्चिन्त्यते, यथा-कि वस्तु जीव इत्यभिधीयते ? इति प्रश्ने निर्वचनमिद द्रष्टव्य-यथौदयिकादिभावयुक्त सचेतनद्रव्य जीव १ कस्यासौ जीव ? इति स्वस्वामिसम्बन्धप्रश्ने विवक्षामात्रादात्मन एव सत्को जीवो नापरस्य, अथवा कस्य प्रभुर्जीव ? इति प्रश्ने आत्मीयस्यैव वस्तुरूपस्य जीवस्तत्त्वतया प्रभुर्न वाह्यस्य धनकनकादे, इहापि तस्य व्यभिचारित्वादिति २, केन कारणकलापेन निष्पन्नो जन्तु ?, न केनचिद, द्रव्यार्थतया नित्यत्वेनाकर्तृकत्वाज्जीवस्य ३, क्वासौ जीव ? स्वशरीरपर्यन्तशरीरमात्रे लोके वा ४, कियच्चिरं कालमसौ भवति ?, सर्वकाल, द्रव्यताऽनाद्यपर्यवसितत्वाज्जीवस्य ५, 'कइविहो उ भावोत्ति' कतिविधोऽसो भाव ? जीव इत्यर्थ, तत्रौदयिकादिभावाना षड्विधत्वात् तद्युक्तस्यैव च भावजीवत्वात् धर्म्मभेदाच्च धर्मिणोऽपि कथञ्चिद्भेदात्षड्विधो भावजीव इति, यद्वा 'कइविहो उ भावो' त्ति 'कतिविध' कतिभेदो भाव पुनः कस्य जीवस्य मध्ये लभ्यते ? इति प्रश्ने निर्वचनमुच्यते—क्षायिकपारिणामिकभावद्वय सिद्धस्य लभ्यते, औदयिकक्षायोपशमिकपारिणामिकलक्षण भावत्रयमेकद्वित्रिचतुरिन्द्रियाणा, मनुष्यवर्जपञ्चेन्द्रियाणा तु त्रितयमिदमेव, चतुर्थस्तु केषाञ्चिदौपशमिक क्षायिको वा भावो लभ्यते, मनुष्याणा तु केषाञ्चिदेते पञ्चापि भावा प्राप्यन्ते, षष्ठस्तु सान्निपातिक सिद्धादीना सर्वेषामप्यनुगतो लभ्यत एव, द्व्यादिभावसन्निपातस्य सर्वत्र प्रतिपादितत्वादिति गाथार्थ ॥ ४ ॥ अथाष्टानुयोगद्वारनिरूपणार्थमाह—

**संतपयपरूवणया दव्वपमाणं च खित्तफुसणा य। कालंतरं च भावो अप्पाबहुयं च दाराइं ॥५॥**

व्याख्या—सदित्येतत्पद सत्पद, जीवादीना सत्वमिति तात्पर्य, तस्य गत्यादिमार्गणाद्वारेषु प्ररूपणता कार्या, यथा क नरकगत्यादौ कि तत् मिथ्यादृष्ट्यादिक जीवस्य स्यात् ? इति, तथा द्रव्यप्रमाण चिन्तनीय, यथा क नरकगत्यादौ कियन्ति जीवद्रव्याणि प्राप्यन्ते ? इति, तथा क्षेत्र वक्तव्य, यथा को जीव कियत्क्षेत्रमवगाहयति ?, तथा को जीव कियत्क्षेत्र स्पृशति ? इत्येवलक्षणा स्पर्शना च वाच्येति, तथा कस्य जन्तो कियान् स्थितिकाल ? इत्यादि च निरूपणीय, तथा नारकादीना निरन्तरमुत्पद्यमानाना कदाचिदन्तरमपि भवति, तत् क कियत्प्रमाण भवति ? इत्यादिस्वरूपमन्तर प्रदर्शनीयम्, अत्रान्तरे के जीवा केषा कतिभागे वर्तन्ते इत्यादिलक्षण भङ्गद्वारमप्यावश्यकादिषु दृश्यते तदिहाल्पबहुत्वद्वारान्तर्भावादिना केनचित्कारणेन नोक्तमिति द्रष्टव्य, तथा क्षायिकादिभावाना मध्ये को जीव कस्मिन् भावे वर्तते ? इत्यादिलक्षणो भाव परिभावनीय, तथा नारकादिजन्तुराशीना च परस्पर क कस्मादल्पो बहुर्वा ? इत्यादिलक्षणमल्पबहुत्व विचारणीयमित्यष्टौ द्वाराणि-जीवसमासव्याख्यानोपायरूपाणीति गाथाक्षरार्थो, विस्तरार्थं तु सूत्रकार प्रकरणपरिसमाप्तिं यावद्वक्ष्यतीति ॥ ५ ॥ अथ गत्यादिमार्गणाद्वाराण्याह—

**गइ इंदिए य काए जोए वेए कसाय नाणे य। संजम दंसण लेसा भव सम्मे सन्नि आहारे ॥६॥**

गतयो-नरकगत्यादिकास्तासु सत्पदप्ररूपणादिद्वारेण जीवभेदा मिथ्यादृष्ट्यादयो मार्गणीया, एवमिन्द्रियकाययोगवेदकषायज्ञानसंयमदर्शनलेश्याभव्यसम्यक्त्वसञ्ज्ञाऽऽहारकलक्षणेष्वपि त्रयोदशसु स्थानेष्वत्र जीवभेदाश्चिन्तनीया, अत एवेतानि चतुर्दशापि मार्गणास्थानान्युच्यन्ते, जीवादिवस्तूनामेतेषु मृग्यमाणत्वात्, जीवभेदाना चेह चिन्तन विस्तरेण सूत्रकार एव करिष्यतीति गाथार्थ ॥ ६ ॥ ननु चतुर्दश जीवसमासा व्याख्येयत्वेनेह प्रतिज्ञाता तत्कि जीवसङ्ग्राहका भेदा प्रकारान्तरेणापि सम्भवन्ति येन चतुर्दशेति विशेषण विहितमित्याशङ्क्यान्यानपि समस्तजीवास्तिकायसङ्ग्राहकान् भेदान् दर्शयन्नाह—

**आहारभव्वजोगाइएहि एगुत्तरा बहू भेया। एत्तो उ चउद्दसण्हं इहाणुगमणं करिस्सामि ॥ ७ ॥**

व्याख्या—इहोपयोगलक्षणो जीव इत्येको जीवसमास, सर्वेषामपि जन्तूनामनेनैकेनैव भेदेन सङ्ग्रहात्, अयं चोत्सर्गसिद्धत्वात्सुप्रतीतत्वाच्च सूत्रेऽनुक्तोऽपि

स्वयमभ्यूह्य, तथा-" विग्गहगइमावन्ना केवलिणो समुहया अजोगी य। सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ १ ॥" इति वचनादाहारकानाहारकभेदत द्विधा जीवसमास, तथा मुक्तिगमनयोग्यो भव्यस्तद्गमनायोग्यस्त्वभव्य रिद्वस्तु न भव्यो नाप्यभव्य इत्येवं त्रिधा जीवसमास, तथा मनोवाक्काययोगैस्तदभावेन च चतुर्द्धा, आदिग्रहणात्क्रोधमानमायालोभैस्तदभावेन पञ्चधा, तथा मिथ्यात्वसास्वादनौपशमिकक्षायिकक्षायोपशमिकमिश्रसम्यक्त्वभेदात्पोढा, तथा कृष्णादिलेश्याषट्केनो तदभावेन च सप्तधा, तथा वेदनाकषायमरणवैक्रियाहारकतेज केवलिसमुद्घातैस्तदभावेन चाष्टधा, तथाऽण्डजपोतजजरायुजरसजसंस्वेदजसंमूर्च्छजोद्भिन्नौपपातिक-यौनिकभेदान्नवधा, तथा पृथिव्यप्तेजोवायुवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियानिन्द्रियभेदाद्दशधा, तथा पर्याप्तापर्याप्तैकद्वित्रिचतुष्पञ्चेन्द्रियभेदादनिन्द्रियै सहैकादशधा, तथा ज्ञानपञ्चकाज्ञानत्रयसम्बन्धिभिरष्टभि साकारोपयोगैश्चक्षुरचक्षुरवधिकेवलदर्शनसम्बन्धिभिश्चतुर्भिरनाकारोपयोगैर्द्वादशधा, तथा पर्याप्तापर्याप्तपृथिव्यप्तेजोवायुवनस्पतिकायत्रसभेदादकायप्रक्षेपाच्च त्रयोदशधा, ' मिच्छद्दिट्ठी सासायणे य तह सम्ममिच्छदिट्ठी ये ' त्यादिचतुर्दशगुणस्थानभेदाच्चतुर्दशधा, तथा पर्याप्तापर्याप्तसूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासञ्ज्ञिसञ्ज्ञिपञ्चेन्द्रियैर्मुक्तैश्च पञ्चदशधा, तथा चतुर्विधवाग्योगचतुर्विधमनोयोगसप्तविधकाययोगैस्तदभावेन च षोडशधा, एवमाद्य को-त्तरया वृद्ध्या बहवो जीवसमासभेदा सम्भवन्ति अतश्चतुर्दशजीवसमास इति विशेषणमादौ कृतम्, एतेभ्यो मध्याच्चतुर्दशानामेव जीवभेदानामिह ग्रन्थेऽनुगमन-व्याख्यान करिष्यामि, तुरेवकारार्थ, स च चतुर्दशानामेवेत्यत्र योजित एव, आह-ननु यद्यपरेऽपि जीवभेदा सम्भवन्ति तत्किमिति शेषपरिहारेण चतुर्दशैवेह व्याख्यायन्ते ? इति, उच्यते, अमीषा बहुतरविचारविषयत्वेन विशिष्टशिष्यमतिव्युत्पत्तिसम्भवतो विशेषोपयोगित्वादिति 'गाथार्थ ॥ ७ ॥ के पुनरते चतुर्दश जीवसमासा येऽत्र व्याख्यास्यन्ते ? इत्याह—

मिच्छा १ ऽऽसायण २ मिस्सा ३ अविरयसम्मा ४ य देसविरया ५ य। विरया प ६ इयरे ७ अपुव्व ८ अणियट्टि ९ सुहुमा १० य ॥८॥
उवसंत ११ खीणमोहा १२ सजोगिकेवलिजिणो १३ अजोगी १४ य। चोद्दस जीवसमासा कमेण एएऽणुगतव्वा ॥ ९ ॥

जीवसमासा १४ ( गुण स्थानकानि ) गा ८-९

व्याख्या—'मिच्छ' त्ति इह सूचामात्रत्वात्सूत्रस्य यथासम्भव सर्वलैकदेशेन समुदायो गम्यते, ततश्च भक्षितहत्पूरपुरुषस्य सिते पीतप्रतिपत्तिवन्मिथ्या-विपर्यस्ता दृष्टि -अर्हत्प्रणीतवस्तुप्रतिपत्तिर्यस्य स मिथ्यादृष्टिः, मिथ्यात्वमोहनीयकर्मोदयाज्जिनदृष्टयथाऽवस्थिततत्त्वार्थश्रद्धानरहित इत्यर्थ, उक्तञ्च—"त मिच्छतं जमसद्दहण तचाण होइ भावाण। ससइयमभिग्गहियं अणभिग्गहिय च त तिविहं ॥ १ ॥" अपरञ्च—"पयमक्खरपि एक्क पि जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोयतोवि हु मिच्छद्दिट्ठी जमालिव्व ॥ २ ॥" समस्तजीवराशेश्चानन्ततमभागरहिता शेषा सर्वेऽपि जीवा मिथ्यादृष्टय १। 'आसायण'त्ति आयम्-औपशमिकसम्यक्त्वलाभलक्षण सादय-ति-अपनयतीति आसादन-अनन्तानुवन्धिकपायवेदनमिति, नैरुक्तो यशब्दलोप, सति ह्यतस्मिन्ननन्तानुवन्धिकपायवेदनेऽनन्तसुखफलदो निश्रेयसतरुवीजभूत औपशमिक-सम्यक्त्वलाभो जघन्यत समयेनोत्कृष्टत षड्भिरावलिकाभिरपगच्छतीति आसादनयोगाज्जीवोऽप्यासादन स चासौ सम्यग्दृष्टिश्चासादनसम्यग्दृष्टि, अथवा आ-समन्ताच्छातयति-स्फोटयत्यौपशमिकसम्यक्त्वमित्याशातन-अनन्तानुवन्धिकषायवेदनमेव तद्योगाज्जीवोऽप्याशातन स चासौ सम्यग्दृष्टिश्चेत्याशातनसम्यग्दृष्टि, यद्वा सम्यक्त्वरसमवाप्यास्वादयति न पुन सर्वथा परित्यजतीत्यास्वादन स चासौ सम्यग्दृष्टिश्चेत्यास्वादनसम्यग्दृष्टि, अय च यथा भवति तथोच्यते-इह गम्भीरापारससारसा-गरमध्यविपरिवर्त्ती जन्तु खलु दुःखपादपवीजभूतमिथ्यात्वप्रत्ययमनन्तान् पुद्गलपरावर्त्ताननन्तानि दुःखलक्षाण्यनुभूय कथमपि तथाभव्यत्वपरिपाकवशाद्गिरिसरिदुपलघोलना-कल्पेनाध्यवसायरूपेणानाभोगनिर्वर्त्तितेन यथाप्रवृत्तकरणेनायुर्वर्जानि ज्ञानावरणादिकर्म्माणि पृथगन्तःसागरोपमकोटीकोटिस्थितिकानि करोति, अत्र चान्तरे तथाविध-कर्म्ममलपटलतिरस्कृतजीववीर्यविशेषाणामसुमता दुर्भेद कर्कशनिविडचिररूढगूढग्रन्थिरिव कर्मपरिणामजनितो निविडरागद्वेषपरिणामरूपोऽभिन्नपूर्वो ग्रन्थिर्भवति, तदुक्त-"गंठित्ति सुदुब्भेओ कक्खडघणरूढगूढगंठिव्व। जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥" अमु च ग्रन्थि यावदभव्या अपि यथाप्रवृत्तकरणेन कर्म क्षपयित्वाऽनन्तश समागच्छन्त्येव, ततो ग्रन्थिभेद कर्त्तुमसमर्थ पुनरपि व्यावृत्य सक्लेशवशादुत्कृष्टस्थितीनि कर्माणि कुर्वन्ति, कश्चित् पुनर्महात्मा समासन्ननिर्वृतिसुख समुल्लसितप्रचुरदुर्वारवीर्यप्रसर प्रचण्डकुलिशदण्डेनेव भूधर यथोक्तग्रन्थिमननुभूतपूर्वतथाविधविशिष्टविशुद्ध्यात्मकेनापूर्वकरणेन त भित्त्वा विशिष्टतरविशुद्ध्यात्मकमेवानिवृत्तिकरणमनु-

भवन् मिथ्यात्वस्थितेरुदयक्षणादारभ्यान्तर्मुहूर्तादुपरितनप्रदेशवेद्यमिथ्यात्वदलिकवेदनाऽभावरूपमन्तरकरणं करोति, एतस्मिंश्च कृते मिथ्यात्वमोहनीयस्य कर्मणः स्थितिद्वयं भवति-अन्तरकरणादधस्तनी अन्तर्मुहूर्तमात्रा प्रथमस्थिति तस्मादेवोपरितनी अन्तर्मुहूर्तोनाऽन्तःसागरोपमकोटीकोटिप्रमाणा शेषा द्वितीयस्थिति, स्थापना, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्तेन वा पुनस्तस्यामपगतायां स्थितौ चापितायामन्तरकरणप्रथमसमय एव मिथ्यात्वदलिकवेदनाऽभावादौपशमिकं सम्यक्त्वमवाप्नोति, यथा हि वनदवः पूर्वदग्धेन्धनमूषरं (वा) प्रदेशमवाप्य विध्यायति तथा मिथ्यात्ववेदनाग्निरपि तत्प्रदेशवेद्यमिथ्यात्वदलिकाभावरूपमन्तरकरणमवाप्य विध्यायत्येव, तस्यां च परमनिधिलाभकल्पायामान्तर्मौहूर्तिक्यामुपशान्ताद्धायां जघन्येन समयशेषायामुत्कृष्टतः षडावलिकावशिष्टायां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्धिकषायोदयः सम्पद्यते, तदुदये चासौ सासादनसम्यग्दृष्टिर्भवति, उपशमश्रेणिप्रतिपतितो वा अनन्तानुबन्धिकषायोदये सासादनसम्यग्दृष्टितां काऽप्यवाप्नोति, जघन्यतः समयादुत्कृष्टतः षडावलिकाभ्यः पुनरूर्द्ध्वमवश्यं मिथ्यात्वोदयादसौ मिथ्यादृष्टिरेव भवतीत्यलं विस्तरेण, एते चासादनसम्यग्दृष्टयः कदाचिदुत्कृष्टतोऽसङ्ख्यया प्राप्यन्त इति सविशेषमुपरिष्टाद्वक्ष्यत इति । 'मिस्स'त्ति सम्यक् च मिथ्या चेत्येवं मिश्रा दृष्टिर्यस्येति मिश्रदृष्टि, इदमत्र हृदयम्-अनन्तरवर्णितविधिना लब्धेनौपधविशेषकल्पेनौपशमिकसम्यक्त्वेन मदनकोद्रवकल्पं दर्शनमोहनीयं कर्म जीवः शोधयित्वा त्रिधा करोति, तद्यथा-शुद्धमर्द्धविशुद्धमविशुद्धं चेति, स्थापना, तत्राणां चैतेषां पुञ्जानां मध्ये यदाऽर्धविशुद्धः पुञ्ज उदेति तदा तदुदयवशादर्द्धविशुद्धमर्हद्दृष्टतत्त्वश्रद्धानं भवति जीवस्य ततोऽसौ मिश्रदृष्टिरुच्यते, सम्यग्मिथ्यादृष्टिरित्यर्थः, अन्तर्मुहूर्तं चैतस्मिन् गुणस्थानेऽवतिष्ठते, तदूर्द्ध्वं सम्यक्त्वं मिथ्यात्वं वाऽवश्यं गच्छति, आह च—"मिच्छाओ संकंती अविरुद्धा होइ सम्ममीसेसु । मीसाओ वा दोसु सम्मा मिच्छं न पुण मीसं ॥१॥" [मिथ्यात्वात् सम्यक्त्वमिश्रयोः सङ्क्रान्तिरविरुद्धा भवति । मिश्राद्वा द्वयोः सम्यक्त्वात् मिथ्यात्वे मिश्रे तु न ॥१॥] एतेऽपि मिश्रदृष्टयः कदाचिदुत्कृष्टतोऽसङ्ख्येयाः प्राप्यन्त इत्यग्रतैव वक्ष्यत इति ३। 'अविरयसम्मा य' त्ति विरमति-सावद्ययोगेभ्यो निवर्तत इति 'गत्यर्थाकर्मके' त्यादिना कर्तरि विहिते क्तप्रत्यये विरतो न तथाऽविरत, अथवा नपुंसके भावे क्तप्रत्यये विरमणं विरतं-सावद्ययोगप्रत्याख्यानमेव नास्ति विरतमस्येत्यविरतः स चासौ सम्यग्दृष्टिश्चेत्यविरतसम्यग्दृष्टि, अयमत्र भावार्थः—यः पूर्वोपवर्णितौपशमिकसम्यग्दृष्टिः शुद्धदर्शनमोहपुञ्जोदयवर्त्ती वा क्षायोपशमिकसम्यग्दृष्टिः क्षीणदर्शनमोहको वा

क्षायिकसम्यग्दृष्टि· परममुनिप्रणीतां सावद्ययोगविरतिं देशतः सर्वतो वा सिद्धिसौधाध्यारोहणनिश्रेणिकल्पां जानन् अप्रत्याख्यानप्रत्याख्यानावरणकषायोदयविघ्नितत्वान्नाभ्युपगच्छति
न च तत्पालनाय यतते स इहाविरतसम्यग्दृष्टिरुच्यते, एते चाविरतसम्यग्दृष्टयोऽसङ्ख्याता· सर्वदैव प्राप्यन्त इति बहुवचनं, 'च' समुच्चये, एवमन्यत्रापि ४। 'देसविरय'त्ति
सर्वसावद्ययोगस्य देशे-एकव्रतविषये स्थूलप्राणातिपातादिसर्वव्रतविषयानुमतिवर्जसर्वसावद्ययोगान्ते विरतं-विरतिर्यस्यासौ देशविरतिः, सर्वसावद्ययोगविरतिस्त्वस्य नास्ति, प्रत्याख्या-
नावरणकषायोदयनिवारितत्वादिति, देशविरतिश्चासौ सम्यग्दृष्टिश्च देशविरतिसम्यग्दृष्टि·, उक्तञ्च—"सम्मदंसणसहिओ गिण्हंतो विरइमप्पसत्तीए। एगव्वयाइचरिमो अणुमइमित्तेत्ति
देसजई ॥ १ ॥ परिमियमुवसेवंतो अपरिमियमणंतयं परिहरंतो। पावइ परम्मि लोए अपरिमियमणंतयं सोक्खं ॥ २ ॥" एतेऽपि देशविरतसम्यग्दृष्टयोऽसङ्ख्याता सर्व-
दैव लभ्यन्ते ५। उक्ता· सर्वविरतिरहितजन्तुसम्भविनो जीवभेदा, साम्प्रतं तत्सहितजन्तुसम्भविनस्तान् विभणिषुराह—**'विरया पमत्त इयरे'** त्ति विरमन्ति-सर्वसावद्ययोगान्निवर्त्तन्त
इति विरता, ते च द्विविधा -प्रमत्ता इतरे च, तत्र सञ्ज्वलनकषायोदयान्मद्यविषयकषायनिद्राविकथालक्षणे· प्रमादस्थाने सर्वैरन्यतरेण वा प्रमाद्यन्ति-संयमयोगेषु सीदन्तीति प्रमत्ता न
प्रमत्ता अप्रमत्ता·, सर्वथा यथोक्तप्रमादरहिता इत्यर्थः ७। 'अपुव्व' त्ति इहापि भीमो भीमसेन इति न्यायादेकदेशेन समुदायस्य गम्यमानत्वादपूर्वकरणा इत्यर्थः·, तत्र स्थिति-
घातरसघातगुणश्रेणिगुणसङ्क्रमस्थितिबन्धादिपदार्थानामपूर्व-तत्प्रथमतयाऽभिनवं करणं क्रिया येषु तेऽपूर्वकरणा, तथाहि-बृहत्प्रमाणाया ज्ञानावरणादिकर्म्मस्थितेरपवर्त्तना-
करणेन खण्डनम्-अल्पीकरणं स्थितिघात उच्यते, रसस्यापि कर्म्मपरमाणुगतस्निग्धत्वलक्षणस्य तेनैव करणेन खण्डनं घातो रसघात, एतौ च द्वावपि पूर्वगुणस्थानेषु विशुद्धे-
रल्पत्वादल्पावेव कृतवन्त, अत्र पुनर्विशुद्धेर्बृहत्प्रमाणतयाऽपूर्वाविमौ कुर्वन्ति, तथोपरितनस्थितेर्विशुद्धिवशादपवर्त्तनाकरणेनावतारितस्य दलिकस्यान्तर्मुहूर्त्तप्रमाणमुदय-
क्षणादुपरिप्रतिक्षणाय प्रतिक्षणं गुणेन असङ्ख्येयगुणवृद्ध्या विरचनं गुणश्रेणिरित्युच्यते, स्थापना, एतां च पूर्वगुणस्थानेष्वविशुद्धत्वात्कालतो दीर्घां दलिकविरचनामाश्रित्य
प्रथीयसीं दलिकस्याल्पस्यापवर्तनाद्विरचितवन्त, अत्र तु तामेव विशुद्धत्वादपूर्वां कालतो ह्रस्वतरां दलिकविरचनामङ्गीकृत्य पुनः पृथुतरां बहुतरदलिकस्यापवर्तनाद्विरचयन्तीति,
तथा बध्यमानाशुभप्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्य प्रतिक्षणं गुणेन-असङ्ख्येयगुणवृद्ध्या विशुद्धिवशात्सङ्क्रमणं-सञ्चारणं नयन गुणसङ्क्रम, तमप्येते विशिष्टतर-

॥ ६ ॥

त्वादिहापूर्वं कुर्वन्ति, तथा स्थितिं च कर्म्मणामशुद्धत्वात्प्राग् दीर्घा वद्धवन्त, अत्र तु तामेव विशुद्धिप्रकर्षतो ह्रस्वतयाऽपूर्वा वध्नन्तीत्येव स्थितिघातादीनामिहापूर्वकरणता द्रष्टव्या, एते चापूर्वकरणा द्विधा-मोहनीयकर्म्मण· क्षपणार्हत्वात्क्षपका, तस्यैवोपशमार्हत्वादुपशमका ८। 'अनियट्टि' त्ति इहाप्येकदेशेन समुदायस्य गम्यमानत्वादनिवृत्ति-वादरसम्पराया इत्यर्थ, तत्र युगपदेतद्गुणस्थानप्रविष्टाना बहूना जीवाना परस्परसम्बन्धिनोऽध्यवसायस्थानस्य व्यावृत्ति-वैलक्षण्य निवृत्तिरिहाभिप्रेता, नास्ति तथा-विधा निवृत्तिरेषामित्यनिवृत्तय, समकालमेवैतद्गुणस्थानकं प्रविष्टस्यैकस्य विवक्षिते प्रथमाद्यन्यतरसमये यदध्यवसायस्थान तदन्योऽपि विवक्षित कश्चित्तदा तद्वर्त्येवेत्यर्थः, सम्परैति-पर्यटति ससारमनेनेति सम्पराय-कषायोदय, वादर-सूक्ष्मसम्परायापेक्षया स्थूर सम्परायो येषा ते वादरसम्पराया, अनिवृत्तयश्च ते वादरसम्पराया-श्च अनिवृत्तिवादरसम्पराया, एते द्विविधा-क्षपका उपशमकाश्च, तत्र क्षपका मोहस्य विंशतिप्रकृती स्त्यानर्द्धित्रिक त्रयोदश नामप्रकृतीश्च क्षपयन्ति, कथम्? इति चेदुच्यते प्रथम तावत्प्रत्याख्यानाप्रत्याख्यानावरणाख्यानष्टौ कषायान् क्षपयितुमारभन्ते, तेषु चार्द्धक्षपितेष्वेवातिशुद्धिवशादन्तराल एव स्त्यानर्द्धित्रिक नाम्नश्चेमास्त्रयोदश प्रकृतीरुच्छेदयन्ति, तद्यथा—नरकद्विक तिर्यग्द्विकमेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातयश्चतस्र आतपमुद्योतं स्थावर साधारणं सूक्ष्ममिति, एतासु च षोडशसु प्रकृतिषु क्षपितासु पुन कषायाष्टकस्य क्षपितशेष क्षपयन्ति, तता नपुसकवेद ततोऽपि स्त्रीवेद तदनन्तरमपि च हास्यादिषट्क ततोऽपि पुरुषवेद तत ऊर्ध्व सञ्ज्वलनक्रोध ततो मानं ततोऽपि माया क्षपयन्तीत्येव मोहस्य विंशतिप्रकृती क्षपयन्ति, लोभमपि वादर क्षपयन्ति, सूक्ष्मस्य सूक्ष्मसम्पराय एव क्षपणान, दर्शनसप्तक तु प्रागेवाविरतायप्रमत्तान्तानस्यायाः क्षपितमिति क्षपकव्यापारो दर्शित, ये तूपशमकास्ते एताएव विंशतिप्रकृतीर्वक्ष्यमाणन्यायेनोपशमयन्ति ९। 'सुहुमा य' त्ति, इहापि पूर्वोक्तनीत्या सूक्ष्मसम्पराया इत्यर्थ, तत्र सूक्ष्म सम्पराय-किट्टीकृतलोभकषायोदयरूपो येषा ते सूक्ष्मसम्पराया, तेऽपि द्विविधा-क्षपका उपशमकाश्च, तत्र क्षपका अनिवृत्तिवादरैः सूक्ष्मकिट्टीकृत लोभं निर्मूलत एव क्षपयन्ति, उपशमकास्तु तमेवोपशमयन्तीति १०। 'उवसंत' त्ति उपशान्तकषाया इत्यर्थ, 'कषशिष' इत्यादि दण्डकधातुर्हिंसार्थस्ततश्च कषन्ति रुष्यन्ते वा परस्परमस्मिन् प्राणिन इति कष-ससार 'पुसि सञ्ज्ञायां घः प्रायेण' ति प्रायोग्रहणाद् घप्रत्यय, अन्यथा हलन्तत्वात् 'हलश्च' ति घञ्प्रत्यय स्यादिति, कषमयन्ते-

गच्छन्त्येभि प्राणिन इति कषाया -क्रोधादय, उपशान्ता -उपशम नीता विद्यमाना एव सङ्क्रमणोद्वर्त्तनादिकरणायोग्यत्वेन व्यवस्थापिता कषाया यैरते उपशान्तकषाया, तत्राविरताद्यप्रमत्तान्तावस्थायां दर्शनसप्तकमुपशमित, ततोऽनिवृत्तिबादरावस्थाया चारित्रमोहस्य प्रथम नपुसकवेदमुपशमयति तत स्त्रीवेद ततोऽपि हास्यादिषट्कं तत पुरुषवेद ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणौ क्रोधौ तत सञ्ज्वलनक्रोधं तत समकालमेव द्वितीयतृतीयमानौ तत सञ्ज्वलनमानतत समकमेव द्वितीयतृतीये माये तत सञ्ज्वलनमाया ततश्चैकदेव द्वितीयतृतीयौ लोभौ ततोऽपि सूक्ष्मसम्परायावस्थाया सञ्ज्वलनलोभमप्युपशमय्य सर्वथैवोपशान्तमोहत्व प्रतिपद्यन्त इत्येवमुपशान्तकषाया अमी प्रोच्यत इति ११। 'खीणमोह' त्ति क्षीणो मोहो येषा ते क्षीणमोहा, सूक्ष्मसम्परायावस्थाया सञ्ज्वलनलोभमपि निःशेष क्षपयित्वा सर्वथा मोहनीयकर्माभाव प्रतिपन्ना इत्यर्थ १२। '**सजोगिकेवलिजिण**' त्ति योगो वीर्यं शक्तिरुत्साह पराक्रम इति चानर्थान्तर, स च मनोवाक्कायलक्षणत्रयभेदतस्त्रिसञ्ज्ञा लभते-मनोयोगो वाग्योग काययोगश्चेति, स चायं त्रिविधोऽपि योगो भगवत प्रस्तुतकेवलिन सभवति, तथाहि-मनोयोगस्तावन्मन पर्यायज्ञान्यादिभिरनुत्तरसुरादिभिर्वा जीवादितत्त्वं किञ्चिन्मनसा पृष्टस्य मनसैव देशनाया सभवति, वाग्योगस्तु सामान्येन देशनादौ, काययोगस्तु चङ्क्रमणोन्मेषादौ, सह योगेन वर्त्तन्त इति सर्वधनादेराकृतिगणत्वेन मत्वर्थीयेन्विधानात्सयोगिन सह यथोक्तेन योगेन वर्त्तन्त इति पाठान्तरं वा, केवल-सम्पूर्णज्ञेयग्राहित्वेन सम्पूर्णं ज्ञानमेषामिति केवलिन, सयोगिनश्च केवलिनश्चेति सयोगिकेवलिन ते च ते रागादिदोषजेतृत्वाज्जिनाश्चेति सयोगिकेवलिजिना १३। '**[अजो]गी य**' त्ति न विद्यते यथोक्तो योगो येषा तेऽयोगिनस्त एव केवलिन अयोगिकेवलिन शैलेश्यवस्थाया सर्वथा समुच्छिन्नमनोवाक्कायव्यापारा इत्यर्थ, एते चतुर्दश जीवसमासा -समग्रजीवराशिसङ्ग्राहकभेदा क्रमेण गत्यादिमार्गणास्थानेषु इह प्रकरणे 'अनुगन्तव्या' विचारणीया इति गाथाद्वयार्थ ॥ ६ ॥ आह-ननु जीवसमासा समग्रजीवराशिसङ्ग्राहकभेदा इहाभिप्रेता, तत्र च ससारे मिथ्यादृष्टयादीनयोगिपर्यन्तान् जन्तून् विहाय न सभवन्त्येवान्ये जीवा अतो युक्त एतैश्चतुर्दशभिर्भेदै सासारिकजीवसङ्ग्रह, मुक्ताना तु सङ्ग्रहो न प्राप्नोति स कथं विज्ञेय ? इत्याशङ्क्यायोगिकेवलिना द्वैविध्यमुपदर्शयन्नाह—

**दुविहा होंति अजोगी निरुद्धजोगी य। अ उण सिद्धा जे सव्वभवमुक्का ॥ १० ॥**

सिद्धानामयो[गि]ता गा १०

॥ ११ ॥

॥ १२ ॥



अयोगिनो द्विविधा भवन्ति, तद्यथा-सभवा अभवाश्च, तत्र सह भवेन-ससारेण वर्त्तन्त इति सभवा -शैलेश्यवस्थाभाविन समुच्छिन्नक्रियाप्रतिपातिध्यानध्यातारो ह्रस्वपञ्चाक्षरोद्गिरणकालमात्रससारा इत्यर्थ, ससारकारणकर्म्ममलकलङ्कलेशेनापि विप्रमुक्तत्वेन सिद्धत्वान्न विद्यते भव-संसारो येषा तेऽभवा, सिद्धा इत्यर्थ, तत्र सभवानाम-भवाना च स्वरूपं सूत्रकार स्वयमेवाह—'निरुद्धजोगी य इह सभव' त्ति चकारो भिन्नक्रमे, स चाभवाद्युत्तरत्र योजित एव, शेषस्य त्वयमर्थ -निरुद्धमनोवाक्काययोगा इह ससारे सावशेषभवोपग्राहिकर्म्मतयाऽद्यापि येऽयोगिनो वर्त्तन्ते ते सभवा इत्युच्यन्ते, अभवा पुन सिद्धा ये सर्वभवप्रपञ्चेन विमुक्ता., तदनेनेतदुक्त भवति योगाभावस्योभ-यत्रापि तुल्यत्वादयोगिशब्दवाच्यता सिद्धानामप्यविरुद्धेवेति तेषामपि समुद्ग्रहोऽत्रोपपद्यत एवेति गाथार्थ ॥ १० ॥ अथैते चतुर्दश जीवसमासा गत्यादिमार्गणास्थानेषु चिन्तयिष्यन्तेऽतो गतिद्वारनिरूपणार्थं तावदाह—

निरयगई तिरि मणुया देवगई चेव होइ सिद्धिगई। नेरइया उण नेया सत्तविहा पुढविभेएण ॥ ११ ॥

तत्र गम्यते स्वकर्मरज्ज्वाकृष्टजन्तुभिर्याऽसौ गति, सा च निरयगत्यादिभेदाच्चतुर्द्धा, तत्राय-इष्टफल दैव, निर्गतमय येभ्यस्ते निरया -सीमन्तकादयस्त एव गम्यमानत्वाद्गतिर्निरयगति, इहाद्यन्तयोर्गतिशब्दस्योपादानान्मध्येऽप्यसौ द्रष्टव्य, ततश्च तिरश्चा-एकेन्द्रियादीना गतिस्तिर्यग्गति, मनुष्याणा गतिर्मनुष्यगति, देवाना गतिर्देवगति, सिद्धिगतिस्तु कर्मजन्या शास्त्रपरिभाषिता न भवति, केवल गम्यत इति गतिरिति व्युत्पत्तिसाम्यमात्रादिहोपात्ता, इह च गतेस्तद्वता चाभेदविवक्षया गतौ प्रस्तुतायामपि गतिमतो नारकान् भेदतो निरूपयन्नाह—'नेरइया उणे'त्यादि, गतिस्तावदित्थं भेदत पञ्चधा प्रोक्ता, नारका पुनर्भेदतश्चिन्त्यमाना. पृथिवीभेदात्स-प्तविधा ज्ञेया, रत्नप्रभादिपृथ्वीना सप्तविधत्वात्तदाधारा नारका अपि सप्तविधा इति भाव इति गाथार्थ. ॥ ११ ॥ अथ किंनामिका. पुनस्ता. पृथिव्यो यद्भेदात् नारका सप्तविधा ? इत्याशङ्क्य पृथ्वीना नामान्याह—

॥ १२ ॥

घम्मा वंसा सेला होइ तहा अंजणा य रिट्ठा य। मघवत्ति माघवत्ति य पुढवीणं नामधेयाइं ॥ १२ ॥

धर्म्मा वंशा शैला अञ्जना रिष्टा मघवती, अन्यत्र क्वचित् मघेत्यसौ पठ्यते, माघवती इत्येतानि रत्नप्रभादीनां यथासङ्ख्यमनादिकालादेवमेव यथाकथञ्चिदन्वर्थनिरपेक्षतया प्रवृत्तानि 'नामधेयानि' अभिधानानीति गाथार्थः ॥ १२ ॥ अथ तासामेव सान्वर्थान्यभिधानान्तराण्याह—

**रयणप्पभा य सक्करवालुयपंकप्पभा य धूमपहा । होइ तम (होईतमा) तमाविय पुढवीणं नामगोत्ताइं ॥ १३ ॥**

रत्नानामिह वक्ष्यमाणगोमेयकरुचकाङ्कलोहिताक्षवैडूर्यप्रभृतीनां बहूनां तत्र सम्भवान्नरकवर्जं प्रायो रत्नानां प्रभा-ज्योत्स्ना यस्या सा रत्नप्रभा, एवं शर्कराया-उपलखण्डानां प्रभा-प्रकाशनं स्वरूपेणावस्थानं यस्या सा शर्करप्रभा, एवमन्यत्रापि प्रभाशब्दो योजनीयः, वालुकाया-परुषपांशूत्कररूपायाः प्रभा-स्वरूपावस्थितिर्यस्याः सा वालुकाप्रभा, पङ्कस्य प्रभा यस्या सा पङ्कप्रभा, पङ्काभद्रव्योपलक्षितेत्यर्थः, धूमस्य प्रभा यस्या सा धूमप्रभा, धूमाभद्रव्योपलक्षितेति भावः, तमसः प्रभा यस्यां सा तमःप्रभा, कृष्णाभद्रव्योपलक्षितेति हृदयम्, अन्ये तु तमा इत्येतावन्मात्रमेव मन्यन्ते, तत्रापि तमोरूपद्रव्ययुक्तत्वात्तमेति मन्तव्यं, अतिशयेन तमः तमस्तमस्तस्य प्रभा यस्या सा तमस्तमःप्रभा, अतिकृष्णद्रव्ययुक्तेत्यर्थः, अत्रापि तमस्तमा इत्येतावदेव केचिदिच्छन्ति, तत्राप्यतिशयवत्तमोरूपद्रव्ययुक्तत्वात्तमस्तमा, इत्येतानि धर्मादिपृथिवीनां तेषु तेष्वपरापरपर्यायेषु नमनात्- सर्वदैवानुवर्त्तनान्नामानि गो - स्वाभिधायकवचनस्य त्राणाद्-यथार्थत्वसम्पादनेन पालनाद्गोत्राणि, सत्यार्थानीत्यर्थः, नामानि च तानि गोत्राणि चेति नामगोत्राणीति गाथार्थः ॥ १३ ॥ उक्ता नरकगतिः, अथ तिर्यग्गतिनिरूपणार्थमाह—

**: तिरियगईया पंचिंदिया य पज्जत्तया तिरिक्खीओ । तिरिया य अपज्जत्ता मणुया य पजत्त इयरे य ॥ १४ ॥**

तिर्यग्गतौ भवास्तिर्यग्गतिकाः, के पुनस्ते ? इत्याह—'पंचिंदिया य'त्ति पञ्चेन्द्रियास्तिर्यग्गतिकाः मीनमहिषमयूरादयः, चशब्दादेकद्वित्रिचतुरिन्द्रियाणां सङ्ग्रहः, एते च सर्वे कथम्भूताः ? इत्याह-पर्याप्तकाः, न केवलमेते, तिर्यञ्चः तिर्यग्योषितश्च पर्याप्तास्तिर्यग्गतौ भवन्ति । ननु किमेते एकेन्द्रियादयः पर्याप्ता एव तिर्यग्गतिका भण्यन्ते?, नेत्याह-अपर्याप्ताश्च एते तिर्यञ्चस्तिर्यग्गतिका भवन्ति, तस्मादेकद्वित्रिचतुष्पञ्चेन्द्रियास्तिर्यञ्चश्च पर्याप्तापर्याप्तास्तिर्यग्गतिका भण्यन्त इति तात्पर्यम् । अथ मनुष्यगतिनिरूप-

गार्थमाह-मनुष्या पर्याप्ता इतरे च-अपर्याप्ता मनुष्यगतौ भवन्तीति शेष इति गाथार्थ ॥ १४ ॥ मनुष्यानेव क्षेत्रादिभेदतश्चिन्तयन्नाह—

**ते कम्मभोगभूमिय अंतरदीवा य खित्तपविभत्ता । सम्मुच्छिमा य गब्भय आरिमिलक्खुत्ति य सभेया ॥ १५ ॥**

'ते' अनन्तरोक्ता पर्याप्तापर्याप्तमनुष्या पुनरपि **'खेत्तपविभत्त'** त्ति निवासस्थानभूतेन क्षेत्रेण हेतुभूतेन प्रविभक्ता पृथक्चिन्त्यमाना सन्तस्त्रिविधा भवन्ति, तदेव च त्रैविध्यमुपदर्शयन्नाह—कृषिवाणिज्यतप सयमानुष्ठानादिकर्म्मप्रधाना भूमय कर्म्मभूमयो-भरतपञ्चकैरावतपञ्चकमहाविदेहपञ्चकलक्षणा पञ्चदश तासु जाता कर्म्मभूमिजा, भुज्यन्त इति भोगा -शब्दरूपरसगन्धस्पर्शाः, ते चेह युगलधार्मिकाणा सम्बन्धिनो विशिष्टा गृह्यन्ते १, कृष्यादिकर्मरहिता भोगप्रधाना एव भूमयो भोगभूमय -हैमवतपञ्चकहरिवर्षपञ्चकदेवकुरुपञ्चकोत्तरकुरुपञ्चकरम्यकपञ्चकैरण्यवतपञ्चकरूपास्त्रिशत् तासु जाता भोगभूमिजा २ अन्तरे-लवणसमुद्रस्य मध्ये द्वीपा अन्तरद्वीपा-एकोरुकादय. षट्पञ्चाशत्तेषु जाता मनुष्या अप्युपचारादन्तरद्वीपा ३, चशब्द समुच्चये, अथ क प्रदेशे पुनरमी द्वीपा वर्त्तन्ते ? किंस्वरूपाश्च ? इति, अत्रोच्यते, इह जम्बूद्वीपे भरतक्षेत्रपर्यन्ते पूर्वापरायततया व्यवस्थितस्य हिमवत्पर्वतस्य पर्यन्तादुत्तरपूर्वस्या दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य, हिमवत. पर्यन्तादीशानकोणानुसारेण त्रीणि योजनशतानि लवणसमुद्र प्रविश्येत्यर्थ, अत्रान्तरे त्रीणि योजनशतानि प्रत्येकमायामविष्कम्भाभ्यामेकोनपञ्चाशदधिकानि नव योजनशतानि किञ्चिन्न्यूनानि परिक्षेपेणैकोरुकनामा द्वीप समस्ति, अय च पञ्चधनु शतविष्कम्भया गव्यूतद्वयोच्छ्रितया पद्मवरवेदिकया वनखण्डेन च सर्वत समवगूढ १, एवमस्यैव हिमवत पर्वतस्य पर्यन्ताद्दक्षिणपूर्वस्या दिशि, आग्नेयकोणानुसारेणेत्यर्थ, त्रीणि योजनशतानि लवणसमुद्रमवगाह्यैकोरुकनिर्दिष्टप्रमाणयुक्त एवाभासिकनामा द्वीप सतिष्ठते २ तथा तस्यैव हिमवत पर्यन्ताद्दक्षिणपश्चिमाया दिशि, नैर्ऋतकोणानुसारेणेति भाव, त्रीणि योजनशतानि लवणसमुद्र प्रविश्य यथोक्तमानयुक्त एव वैषाणिकनामा द्वीपो मन्तव्य ३ हिमवत एव पर्यन्तात् पश्चिमोत्तरस्या दिशि, वायव्यकोणानुसारेणेत्यर्थ, त्रीणि योजनशतानि लवणसमुद्रमवगाह्याभिहितप्रमाणान्वित एव नङ्गोलिकनामा द्वीप. प्राप्यत इति ४, एवमेते चत्वारो द्वीपा हिमवत एव चतसृष्वपि विदिक्ष्वेकप्रमाणाद्यन्विताः प्रोक्ता, अ[न्य]तो यथाक्रममेकोरुकादीना: परतो व्यवस्थिता भिन्नप्रमाणाद्यन्विताश्चत्वारो द्वीपा प्रोच्यन्ते, तद्यथा—एकोरुकद्वीप-

स्योत्तरपूर्वस्या दिशि चतुर्भिर्योजनशतै परत [ प्रत्येकं ] चत्वारि योजनशतान्यायामविष्कम्भाभ्या किञ्चिन्न्यूनपञ्चषष्ट्यधिकद्वादशयोजनशतानि परिक्षेपेण हयकर्णनामा द्वीपो भवति ५, पूर्वोक्तप्रमाणा पद्मवरवेदिका वनषण्डं च पार्श्वत सर्वद्वीपाना द्रष्टव्यम्, एवमाभासिकद्वीपस्य दक्षिणपूर्वस्यामेव दिशि चतुर्भिरेव योजनशतै परतो हयकर्णद्वीप-निर्दिष्टप्रमाणयुक्त एक गजकर्णाभिधानो द्वीप समवसेय ६, तथा वैषाणिकद्वीपस्य दक्षिणपश्चिमायामेव दिशि चतुर्भिरेव योजनशतै परतो हयकर्णद्वीपप्रमाण एव गोकर्णाभिधानो द्वीप समवगन्तव्य ७, एवं नङ्गोलिकद्वीपस्य पश्चिमोत्तरस्यामेव दिशि चतुर्भिरेव योजनशतै परतो हयकर्णद्वीपसमान एव शष्कुलीकर्णनामा द्वीपो बोद्धव्य इति ८, एवमेतेऽपि हयकर्णादयश्चत्वारो द्वीपा समानपरिमाणाद्यन्विता प्रोक्ता, एवमेतेषा चतुर्णामप्यनन्तरोक्तहयकर्णादिद्वीपाना यथासङ्ख्यमनन्तरोक्तासु उत्तरपूर्वादिकासु चतसृष्वपि विदिक्षु पञ्चभि पञ्चभिर्योजनशतै परत क्रमेणादर्शमुखमिण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपा भवन्ति, एते च प्रत्येक पञ्चयोजनशतान्यायामविष्कम्भाभ्यामेकाशीत्यधिकपञ्चदशयोजनशतानि परिक्षेपेण भवन्ति १२, एतेषा त्वादर्शमुखादीनामेतास्वेव विदिक्षु षड्भिर्योजनशतै परतो यथासङ्ख्यमश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखाभिधानाश्चत्वारो द्वीपा वक्तव्या प्रत्येकं षड्योजनशतान्यायामविष्कम्भाभ्या सप्तनवत्यधिकाष्टादशयोजनशतानि परिक्षेपेण भवन्ति १६, एषामप्यश्वमुखादीना तास्वेव विदिक्षु सप्तभि सप्तभिर्योजनशतै परतो यथासङ्ख्यमश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपा द्रष्टव्या सप्तसप्तयोजनशतान्यायामविष्कम्भाभ्या त्रयोदशाधिकद्वाविंशतियोजनशतानि परिक्षेपेण च भवन्ति २०, एतेषा चाश्वकर्णादीनामभिहितास्वेव विदिक्ष्वष्टभिरष्टभिर्योजनशतै परतो यथासङ्ख्यमुल्कमुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपा मन्तव्या, अष्टाष्टयोजनशतान्यायामविष्कम्भाभ्यामेकोनत्रिंशदधिकपञ्चविंशतियोजनशतानि परिक्षेपेण भवन्ति २४, अमीषा चोल्कमुखादीना तास्वेव विदिक्षु नवभिर्नवभिर्योजनशतै परतो यथाक्रमं घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपा मन्तव्या, नवनवयोजनशतान्यायामविष्कम्भाभ्या पञ्चचत्वारिंशदधिकाष्टाविंशतियोजनशतानि परिक्षेपेण च भवन्ति २८, एतेषु च द्वीपेषु वज्रर्षभनाराचसंहननयुक्ता समचतुरस्रसंस्थानसंस्थिता समग्रलक्षणव्यञ्जनगुणोपेता देवलोकानुकारिरूपलावण्यालङ्कृतविग्रहा अष्टधनु शतप्रमाणा, स्त्रीणा त्विदमेव प्रमाण किञ्चिन्न्यून द्रष्टव्य, पल्योपमासङ्ख्येयभागायुष स्त्रीपुरुषयुगलव्यवस्थिता मनुष्या परिवसन्ति । एते च दशविधकल्पद्रुमोपजीविनो भवन्ति, ते चामी

कल्पद्रुमा 'मत्तगा भिंगगा तुडियगा दीवसिहा जोईसिया चित्तगा चित्तरसा मणियगा गेहागारा अणिगणा य' त्ति तत्राद्या कल्पशाखिनो विशिष्टबलवीर्यकान्तिहेतुविस्रसापरिणतसरससुगन्धिस्वादुमनोहारिनानाप्रकारमदिरापरिपूर्णकोशकै फलैरिव शोभमानास्तिष्ठन्ति, तेभ्यस्तेषां मनुष्याणां मद्यावाप्तिर्भवतीति, भृङ्गाङ्गा पुनर्यथेह मणिस्वर्णकमयविचित्रभाजनानि दृश्यन्ते तथैव विश्रसापरिणतैः स्थालकच्चोलादिभिर्नानाविधभाजनैः फलैरिव शोभमाना दृश्यन्ते, तेभ्यस्तेषां भाजनानि भवन्ति, एवमन्यत्रापि यद्येषु प्राप्यते तत्तेभ्यस्तेषां भवतीति द्रष्टव्यं, तुडिताङ्गाभिधानास्तु कल्पमहीरुहस्ततविततघनशुषिरभेदभिन्नैर्बहुप्रकारैरातोद्यैः फलैरिवोपशोभितास्तिष्ठन्ति, तत्र च 'ततं वीणादिकं ज्ञेयं, विततं पटहादिकम् । घनं तु-कांस्यतालादि, शुषिरं काहलादिकम् ॥ १ ॥ दीपशिखास्तु यथेह स्निग्धं प्रज्वलन्त्यः कनकमणिमय्यो दीपिका उद्योतं कुर्वाणा दृश्यन्ते तद्वद्विस्रसापरिणतप्रकृष्टोद्योतेन सर्वमुद्योतयन्तस्तिष्ठन्ति, ज्योतिःशिखास्तु रविमण्डलमिव स्वतेजसा सर्वमवभासयन्तो वर्त्तन्ते इति, चित्राङ्गास्तु विचित्रसरससुरभिपञ्चवर्णमाल्यमालाभिराकीर्णाः सदैवासत इति, चित्ररसास्त्विहत्यकलमशालिदालिपक्वान्नव्यञ्जनादिभ्योऽतीवापरिमितमाधुर्यस्वादुतादिगुणोपेतविचित्रस्वाद्यभोज्यवस्तुपरिपूर्णैः फलमध्यैर्विराजमानाः सतिष्ठन्त इति, मणिकाङ्गास्तु विस्रसापरिणतानि विमलमहार्घ्यभुवनैकसारस्फारहारकटककेयूरनूपुरादिभिर्भूषणनिवहैः समन्वितास्तिष्ठन्तीति, गृहाकारास्तु विस्रसापरिणामत एव प्राकारोपगूढसोपानपङ्क्तिविचित्रशालारतिगृहगवाक्षगुप्तप्रकटानेकापवरककुट्टिमतलायलङ्कृतविचित्रभवनसमनुगताः सतिष्ठन्त इति, अनग्नास्तु विश्रसावशात एव स्फुरत्प्रचुरतेजोऽतिसूक्ष्मसुकुमालदेवदूष्यानुकारिप्रवरविचित्रवस्त्रानुगताः प्राप्यन्त इति । अपरञ्च ते मनुष्याः प्रकृत्या भद्रका विनीताः प्रशान्ताः प्रतनुक्रोधमानमायालोभा अल्पेच्छा निरौत्सुक्याः कामचारिणो वायुवेगाः, सत्यपि तत्र कनकमणिमौक्तिकादिके ममत्वकारणे ममत्वमूर्च्छाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धाः परस्परप्रेष्यतादिभावविनिर्मुक्ता अहमिन्द्राः, हस्त्यश्वकरभगोमहिष्यादीनां तत्र सद्भावेऽपि तत्परिभोगरहिताः, पादविहारचारिणो रोगवेदनादिविनिर्मुक्ता भवन्ति, चतुर्थाच्चैते आहारं गृह्णन्ति, चतुःषष्टिश्च पृष्ठिकरण्डकास्तेषां, षण्मासावशेषायुषश्च स्त्रीपुरुषयुगलममी प्रसवन्ति, एकोनाशीतिं च दिनानि तत्परिपालयन्ति, स्नेहकषायाल्पतया च मरणानन्तरं दिवमुपगच्छन्ति, तत्र हि व्याघ्रसिंहसर्पादिश्वापदगणा अपि क्रूरतादिदोषविनिर्मुक्ता न परस्परं भक्षणादिषु प्रवर्त्तन्तेऽत एव तेऽपि देवलोकगामिन एव, तेषु च द्वीपेषु शालिव्रीह्यादीनि धान्यानि विस्रसात

एव भवन्ति न तु मनुष्यादयो भुञ्जते, भूमिमृत्तिकापुष्पफलानि च तस्या शर्करातोऽप्यतीवमाधुर्यादिगुणोपेतानि भवन्त्यतस्तानि मनुष्याणां परिभोगमायान्ति, तेषु च द्वीपेषु दंशमशकयूकामत्कुणादयश्चन्द्रसूर्योपरागादयश्च न भवन्ति, भूमिश्च तत्र रेणुपङ्ककण्टकादिरहिता सर्वत्र समतला रमणीया च भवतीत्यलं विस्तरेण। तदेवमेते मेरोर्दक्षिणतस्तावदष्टाविंशतिर्द्वीपाः प्रोक्ता, मेरोरुत्तरतोऽप्येतैरेव नामभिरनेनैव प्रमाणादिना स्वरूपेण युक्ता अष्टाविंशतिर्द्वीपा वक्तव्याः, केवलं हिमवत्पर्वतस्य स्थाने ऐरवत-पर्यन्तवर्त्ती शिखरी पर्वतो वाच्यः, अन्यन्निरवशेषं तथैव, तदेवमेते दर्शिता लेशतः षट्पञ्चाशदन्तरद्वीपाः, विस्तरतस्तु जीवाभिगमादिभ्योऽवसेयाः, यदेव चेह कल्पवृक्षा-दिस्वरूपमुक्तं हैमवताद्यकर्मभूमिष्वपि तदेव द्रष्टव्यं, केवलमायुष्कादिनाऽन्यथात्वं, तच्च बहुषु स्थानान्तरेषु सुप्रतीतत्वादिह नोक्तम्, अन्तरद्वीपानां तु स्वरूपं स्वल्प एव स्थानान्तरेऽभिहितमिति विशेषतोऽत्र प्रदर्शितमिति, एतेऽपि कर्म्मभूमिजादयः सामान्येन मनुष्याः पुनरपि सह भेदैर्वर्त्तन्त इति सभेदा भवन्ति, कथमित्याह-'**संमुच्छिमा य**' इत्यादि, समूर्च्छनं-गर्भनिरपेक्षं वान्तपित्तादिष्वेवमेव भवनं समूर्च्छनं तस्माज्जाताः समूर्च्छजा मनुष्याः, एते च मनुष्यक्षेत्र एव गर्भजमनुष्याणामेवोच्चारादिषूत्पद्यन्ते नान्यत्र, यत उक्तं **प्रज्ञापनायाम्**—'कहि णं भंते! समुच्छिममणुस्सा समुच्छंति?, गोयमा! अंतोमणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरससु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा पूएसु वा सोणिएसु वा सुक्केसु वा सुक्कपोग्गलपरिसाडेसु वा थीपुरिससंजोएसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुइएसु ठाणेसु समुच्छिममणुस्सा समुच्छंति, अंगुलस्स असंखेज्जइभागमित्ताए ओगाहणाए असन्नी मिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतोमुहुत्ताउया चेव कालं करेंति, सेत्तं समुच्छिममणुस्सा'' । योषितां गर्भेषु जाता गर्भजा मनुष्याः, प्रतीता एवेति। आराद्-दूरेण सर्वहेयधर्मेभ्यो याता आर्याः, ते च द्विविधा-ऋद्धिप्राप्ता अनृद्धिप्राप्ताश्च, तत्र ऋद्धिप्राप्ताः षड्विधास्तद्यथा—तीर्थकरचक्रवर्त्तिवासुदेवबलदेवचारणमुनिविद्याधराः, अनृद्धिप्रा-प्ताश्च आर्या नवविधाः प्रज्ञप्तास्तद्यथा-क्षेत्रत आर्याः, जातितः कुलतः कर्मतः शिल्पतो भाषातो ज्ञानतो दर्शनतश्चारित्रतश्चेति, तत्र क्षेत्रत आर्या ये आर्यक्षेत्रेषूत्पद्यन्ते, येषु च तीर्थकराणां तत्साधूनां तद्धर्म्मस्य च प्रवृत्तिरस्ति तान्यार्यक्षेत्राण्युच्यन्ते, तानि चामूनि-''रायगिह मगह १ चंपा अंगा २ तह तामलित्ति वंगा य ३। कंचणपुर कलिंगा ४

वाणारसिमेव कासी य ५ ॥१॥ साएय कोसला ६ गयउर च कुरु ७ सोरिय कुसट्टा ८ य। कपिल्ल पचाला ९ अहिछत्ता जंगला चेव १० ॥२॥ बारवई य सुरट्ठा ११ मिहिल विदेहा य १२ वच्छ कोसबी १३। नदिपुर संडिल्ला १४ भद्दिलपुरमेव मलया य १५ ॥ ३ ॥ वइराड वच्छ १६ वरणा अच्छा १७ तह मत्तियावइ दसण्णा १८। सोत्तियमई य चेई १९ वीयभय सिंधुसोवीरा २० ॥ ४ ॥ महुरा य सूरसेणा २१ पावा भंगी य २२ मास परिवट्टी २३। सावत्थी य कुणाला २४ कोडीवरिस च लाढा य २५ ॥ ५ ॥] सेयवियावि य नयरी केयइअद्धं च आरिय भणिय। एत्थुप्पत्ति जिणाण चक्कीणं रामकण्हाण ॥ ६ ॥" अयमिह तात्पर्यार्थ — राजगृह नगर राजधानी मगधाजनपद चम्पा राजधानी अङ्गा जनपद ताम्रलिप्ती राजधानी वङ्गा जनपद इत्येवं सर्वत्र द्रष्टव्यं यावच्छ्वेतविका नगरी केकयीजनपदस्यार्द्धं। तदेवमेते सार्द्धा पञ्चविंशति-जनपदा [आर्यक्षेत्राण्युच्यन्ते, एतेषूत्पन्ना मनुष्या क्षेत्रत आर्या व्यपदिश्यन्ते, एते च प्रत्यासत्त्या भरतक्षेत्रवर्तिन एव क्षेत्रार्या प्रोक्ता, एतेषा चोपलक्षणत्वादन्येऽपि महावि-देहान्तर्वर्त्तिविजयमध्यमखण्डादिष्वमी बहवो द्रष्टव्या इति, जात्यार्यास्तु षड्विधा, यत उक्तं **प्रज्ञापनायाम्** — "अंबट्ठा य कलंदा(य), विदेहा वेदगाइ य। हरिया य चुचुणा चेव, छप्पेया इब्भजाइओ ॥ १ ॥" एतासु षट्सु जातिषूत्पन्ना जात्यार्या प्रोच्यन्ते, केवलमेता जातय साम्प्रत न ज्ञायन्ते, कुलार्या अप्युग्रभोगराजन्येक्ष्वाकुज्ञातकौरव्यकुलोत्पत्ति-भेदात्षड्विधा, *कर्मार्यास्तु ये आर्यं कर्म्म कुर्व्वन्ति न निन्दित, ते च दौष्यिकगान्धिकसौत्रिककार्पासिककौसुम्भिकादयोऽनेकविधा, शिल्पार्या [अप्यनिन्दितशिल्पकारिण, तेऽपि तुन्नाकलेप्यकारशङ्खकारदन्तकारचित्रकारादयोऽनेकविधा, भाषार्यास्तु येऽर्द्धमागधया भाषया भाष्यते, येषु चाष्टादशभेदा ब्राह्मीलिपि प्रवर्तते, सा चेदानी सम्यग् न ज्ञायते, आभिनिबोधकज्ञानादयो ज्ञानार्या, क्षायिकसम्यग्दृष्ट्यादयो दर्शनार्या, सामायिकचारित्रादयश्चारित्रार्या। 'मिलिक्खुत्ति य' त्ति 'च' समुच्चये येषु धर्म्मस्य नामापि न ज्ञायते केवलमपेयपानाभक्ष्यभक्षणागम्यगमनादिनिरता शास्त्राद्यप्रतीतवेषभाषादिसमाचारास्तेऽनार्या मनुष्या म्लेच्छा उच्यन्ते, ते च बहुविधास्तद्यथा — "सगजवणसवरबब्बरकायमुरुडोड्डगोड्डपक्कणया। अरवागहूणरोमगपारसखसखासिया चेव ॥ १ ॥ दुविलयलउसबोक्कसभिल्लपुलिंदकुंचभमररुया। कुंचायचीणचुंचुयमाल-

* [ ये चान्ये आतृतीयाद्वा पञ्चमाद्वा सप्तमाद्वा कुलकरेभ्यो वा विशुद्धान्वयप्रकृतय तत्त्वार्थभाष्ये ]

वदमिला कुलग्घा य ॥ २ ॥ केकयकिरायहयमुहरवरमुह तह तुरगमिढगमुहा य। हयकण्णा गयकण्णा अण्णे य अणारिया बहवे ॥ ३ ॥ पावा य चडरद्दा अणारिया निग्घिणा निरणुकपा। धम्मोत्ति अक्खराइं जेसु न नज्जंति सुमिणेवि ॥ ४ ॥" इह च कर्म्मभूमिजभोगभूमिजान्तरद्वीपजानां सर्वेषामपि गर्भजसम्मूर्च्छनभेदद्वयं सामान्येन सम्भवति, कर्म्मभूम्यादिषु त्रिष्वपि स्थानेषु सम्मूर्च्छजाना गर्भजाना च मनुष्याणामुत्पादात्, आर्यम्लेच्छलक्षणभेदद्वयं तु कर्म्मभूमिजानामेव द्रष्टव्यं, [1]अन्येषां भोगपुरुषत्वेन राश्यन्तरत्वादार्यम्लेच्छरूपविकल्पातीतत्वादित्यलं विस्तरेणेति गाथार्थ ॥ १५ ॥ अथ देवगतिस्वरूपनिर्णयार्थमाह—

देवा य भवणवासी वतरिया जोइसा य वेमाणी। कप्पोवगा य नेया गेविज्जाणुत्तरसुरा य ॥ १६ ॥

दीव्यन्तीति देवाः प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषाः, ते च मूलभेदतस्तावच्चतुर्विधास्तद्यथा—भवनेषु-रत्नमयावासविशेषेषु वसन्तीति भवनवासिनः, विशिष्टे—अध ऊर्ध्वं च प्रत्येकं योजनशतरहितप्रथमयोजनसहस्रलक्षणे रत्नप्रभापृथिव्या अन्तरे-मध्ये भवा व्यन्तराः, ज्योतिः-तेजस्तद्विद्यते येषां मत्वर्थीयात्प्रत्यये ज्योतिषाः, विमानेश्चरन्तीति वैमानिकाः, अनन्तरोक्तत्वात् सर्वदेवनिकायप्रधानत्वाच्च वैमानिकास्तावद्विशेषत स्वभेदानाह-'कप्पोवगे'त्यादि, अभिनवोत्पन्नानां देवानां मज्जनकरणालङ्कारग्रहणव्यवसायसभागमनपुस्तकवाचनसिद्धायतनपूजनपुरन्दरोपसेवनादिलक्षणमवश्य कर्तव्यं कल्पस्तमुपगच्छन्ति-आश्रयन्ति सेवन्तीति कल्पोपगा-द्वादशदेवलोकवर्त्तिनो वैमानिका ज्ञेयाः, तेषु सर्वेष्वपि यथोक्तकल्पस्य सद्भावात्, परतस्तु कल्पातीता ग्रैवेयकानुत्तरसुरेषु च, निर्दिष्टस्वरूपकल्पासम्भवात्, तानेव कल्पातीतान् दर्शयति-लोकपुरुषस्य ग्रीवाप्रदेशे भवानि विमानानि ग्रैवेयकानि तेषु भवा देवा अप्युपचारतो ग्रैवेयकाः, न विद्यन्ते उत्तरे-प्रधाना अन्ये देवा येभ्यस्तेऽनुत्तरास्ते च ते

[1] तत्त्वार्थभाष्ये तु 'आर्या म्लिशश्चे'-ति सूत्रे अतो विपरीता म्लिश, तद्यथा-हिमवतश्चतसृषु विदिक्षु त्रीणि योजनशतानि लवणसमुद्रमवगाह्य चतसृणां मनुष्यविजातीनां चत्वारोऽन्तरद्वीपा भवन्ति त्रिशतयोजनविष्कम्भायामा, तद्यथा-एकोरुकाणामाभाषकाणा—शिखरिणोऽप्येवमेवेत्येव षट्पञ्चाशत् इति ॥ अत्र भरतादिविजयापेक्षयाऽऽर्यानार्यविभागोऽभिप्रेत, ततश्च स्पष्टैव जात्यन्तरता युग्मिना, भाष्ये तु जातिज्ञानचारित्राद्यार्यत्वाभावापेक्षयाऽनार्यत्वविवक्षेति सुधियोह्य, मूले व्यापक द्वैतं।

देव भेदा गा, १६

सुराश्चेत्यनुत्तरसुराः, विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धलक्षणविमानपञ्चकवासिनः, एते उभयरूपा अपि कल्पातीता इति मन्तव्याः, तावदहमिन्द्रतया सकलकल्पादिकल्पस्य सर्वं वानम्भवादिति गाथार्थः ॥ १६ ॥ अथ भवनपत्यादिदेवानामुत्तरभेदान् प्रतिपादयितुमुपक्रमते—

अमुरा नागसुवन्ना दीवोदहित्थणियविज्जुदिसिनामा । वायग्गिकुमाराविय दसेव भणिया भवणवासी ॥ १७ ॥

कुमारशब्दः प्रत्येकमभिसम्बध्यते, ततश्चासुरकुमारा नागकुमाराः सुवर्णकुमारा दीपकुमारा उदधिकुमाराः स्तनितकुमारा विद्युत्कुमारा दिक्कुमारा वायुकुमारा अग्निकुमारा इत्येवं दशविधा एव भवनवासिनो भवन्ति, गाथाबन्धानुलोम्यादिकारणाच्च व्युत्क्रमेण एव पठिताः, आगमे त्वमी अमुनैव क्रमेण पठ्यन्ते, यथा—"असुरा नाग-सुवन्ना विज्जू अग्गी य दीव उदही य । दिसि वाऊ तह थणिया दसभेया हुंति भवणवई ॥ १७ ॥" व्यन्तरभेदानाह—

किंनरकिंपुरिसमहोरगा य गंधव्व रक्खसा जक्खा । भूया य पिसायाविय अट्ठविहा वाणमंतरिया ॥ १८ ॥

एतेऽप्यागमे प्राय इत्थमेव निर्दिश्यन्ते, तद्यथा—"पिसाय भूया जक्खा रक्खसा किंनरा य किंपुरिसा । महोरगा य गंधव्वा अट्ठविहा वाणमंतरिया ॥ १ ॥" इह तु किंनरादिक्रमनिर्देशकारणं स्वयमभ्यूह्यमिति ॥ १८ ॥ ज्योतिष्कभेदानाह—

चंदा सूरा य गहा नक्खत्ता तारगा य पंचविहा । जोइसिया नरलोए गइरयओ संठिया सेसा ॥ १९ ॥

असङ्ख्येयाश्चन्द्राः असङ्ख्येयाश्च सूर्याः, एवं प्रत्येकमसङ्ख्याता ग्रहनक्षत्रतारका इत्येवं ज्योतिष्काः पञ्चविधाः । आह-नन्वेते परिदृश्यमानचन्द्रादिविमानाः सर्वेऽपि चला उत केचिदवस्थिता अपि भवन्ति ? इत्याशङ्क्याह-'नरलोए गइरयउ' त्ति नरलोको-मनुष्यक्षेत्रं तत्र, ये ज्योतिष्कास्तत्र नरलोके मानुषोत्तरपर्वतान्तर्वर्तिनो वर्तन्ते ते सर्वेऽपि गतौ-चलने रतिः-स्वभावतो वृत्तिर्येषां ते गतिरतयः, शेषास्तु ये मानुषोत्तरपर्वतात्परेण स्वयम्भूरमणसमुद्रं यावद्वर्तन्ते ते सर्वेऽपि 'संस्थिता' अचलनधर्मकत्वेन स्थानस्था एव तिष्ठन्तीत्यर्थः, क्वचित् 'तिरियलोए' इतिपाठः, स चासङ्गत एव लक्ष्यते, यतो नरलोके गतिरतय इत्येतावतोक्ते संस्थिताः शेषा इत्युपपद्यते, नान्यथा, तिर्यग्लोकव्यापा

भवनपतिव्य-
न्तरज्योति-
ष्का गा
१७-१८-१९

सवर्थ्यैवाभावात, नापि तिर्यग्लोके गतिरतय इति वाक्यार्थो घटते, स्थितिरतोनामपि तिर्यग्लोक एव भावादित्यलं विस्तरेणेति गाथार्थः ॥ १६ ॥ कल्पोपगवैमानिकाना भेदानाह—

**सोहम्मीसाणसणंकुमारमाहिंदबंभलंतयया । सुक्कसहस्सारा णयपाणयय तह आरणच्चुयया ॥ २० ॥**

प्रतीतार्थैव ॥ २० ॥ कल्पातीतवैमानिकाना विशेषतो भेददर्शनार्थमाह—

**हेट्ठिममज्झिमउवरिमगेविज्जा तिण्णि तिण्णि तिण्णेव । सव्वट्ठविजयविजयंतजयंत अपराजिया अवरे ॥ २१ ॥**

इह ग्रैवेयकेषु नव प्रस्तटास्तत्राधस्तनास्त्रयोऽधस्तनग्रैवेयका उच्यन्ते मध्यमास्त्रयो मध्यमग्रैवेयकाः उपरितनास्तु त्रय उपरितनग्रैवेयकाः, एतानि च त्रीण्यपि प्रस्तटत्रिकाणि प्रत्येकं त्रिभिस्त्रिभिः सञ्ज्ञा लभन्त इति ग्रैवेयकाणा नवविधत्वसिद्धिः, तत्राधस्तनेषु त्रिषु प्रस्तटेषु योऽधस्तनप्रस्तटस्तत्र यानि विमानानि तान्यधस्तनाधस्तनग्रैवेयकान्युच्यन्ते १, मध्यमे त्वधस्तनमध्यमग्रैवेयकान्युच्यन्ते २ उपरितने त्वधस्तनोपरितनग्रैवेयकानि ३, मध्यमेष्वपि त्रिष्वधस्तनप्रस्तटेषु मध्यमाधस्तनग्रैवेयकानि १ मध्यमे तु मध्यममध्यमग्रैवेयकानि २ उपरितने तु मध्यमोपरितनग्रैवेयकानि ३, उपरितनेष्वपि त्रिषु प्रस्तटेष्वधस्तने प्रस्तटे उपरितनाधस्तनग्रैवेयकानि १ मध्यमे तूपरितनमध्यमग्रैवेयकानि २, उपरितने तूपरिमोपरिमग्रैवेयकानि ३, एतदेवाह-'तिण्णि तिण्णी'त्यादि, शेषं तूक्तार्थमेवेति गाथार्थ ॥ २१ ॥ तदेवं दर्शिताश्चतस्रो नारकादिगतयो,, अथ यदुक्तं पूर्वं 'गइयाइमग्गणाहि य जीवसमासाणुगतव्व' त्ति तदनुसरन् गुणस्थानलक्षणान् जीवसमासान् यथोक्तासु गतिषु तावच्चिन्तयन्नाह—

**सुरनारएसु चउरो जीवसमासा उ पंच तिरिएसु । मणुयगईए चउदस मिच्छद्दिट्ठी अपज्जत्ता ॥ २२ ॥**

सुरेषु नारकेषु च प्रत्येकं चत्वारो जीवसमासा प्राप्यन्ते, मिथ्यादृष्टिसास्वादनमिश्राविरतसम्यग्दृष्टिलक्षणान्याद्यानि चत्वारि गुणस्थानकानि सामान्यतो लभ्यन्त इत्यर्थः, विशेषचिन्तायां त्वनुत्तरसुरेष्वेकमेवाविरतसम्यग्दृष्टिगुणस्थानं लभ्यते, देशविरतादीनि तु गुणस्थानानि सुरनारकेषु न लभ्यन्ते, अवश्यं हि तेषामप्रत्याख्यानावरणकषायोदयसद्भावात, तदुदये च विरतेर्देशतोऽप्यसम्भवादिति, तिर्यक्षु पुनः पञ्च जीवसमासा, तत्र चत्वारस्तावत्पूर्वोक्ता एव, देशविरतगुणस्थानलक्षणस्तु पञ्चमः केषाञ्चिदप्र-

वैमानिका
गा २०-१
सुरादिषु जीव
समासाः
गा. २२

त्याख्यानावरणकषायक्षयोपशमसम्भवेन देशविरतेरपि :लाभादिति भाव,, प्रमत्तसयतादीनि तु गुणस्थानानि तेषु न लभ्यन्ते, अवश्य प्रत्याख्यानावरणकषायोदयस्य सद्भावात्, तदुदये च सर्वविरतेरभावादिति, मनुष्यगतौ पुनश्चतुर्दशापि जीवसमासा प्राप्यन्ते, तस्या सर्वस्यापि मोहनीयादेरुदयक्षयोपशमादिसम्भवादिति, सामान्यचिन्ता चेयमतो विशेषचिन्तायामपि किञ्चिद्दिग्मात्रमभिधीयते—'मिच्छदिट्ठी'त्यादि, ये लब्धितोऽपर्याप्ता मनुष्यास्तिर्यञ्चश्च ते सर्वेऽपि मिथ्यादृष्टय एव, सङ्क्लिष्टत्वेन शेषगुणाना तत्रासम्भवादिति, एव कर्म्माकर्म्मभूमिजादिभेदेन विशेषविचारणायामपरेऽपि ये विशेषास्ते स्वयमभ्यूह्या इति गाथार्थ ॥ २२ ॥ अवसित गतिद्वारमथेन्द्रियद्वार निरूप्यते, इन्द्रियाणि च निराश्रयाणि न सभवन्ति, आश्रयाश्च तेषामेकेन्द्रियादिजीवा अतस्तद्द्वारेण तद् विभणिषुराह—

**एगिंदिया य बायरसुहुमा पज्जत्तया अपज्जत्ता। बियतियचउरिंदियदुविहभेय प इयरे य ॥ २३ ॥**

**पंचिंदिया असण्णी सण्णी पज्जत्तया अपज्जत्ता। पंचिंदिएसु चोद्दस मिच्छदिट्ठी भवे सेसा ॥ २४ ॥**

एकेन्द्रिया द्विविधा , चशब्दस्य भिन्नक्रमत्वाद्बादरा सूक्ष्माश्च, बादरनामकर्मोदयाद्बादरा -सूक्ष्मनामकर्मोदयाच्च सूक्ष्मा इति, तेऽपि प्रत्येक द्विविधा पर्याप्तका अपर्याप्तकाश्च, द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया अपि प्रत्येक द्विभेदा -पर्याप्तका इतरे च-अपर्याप्तका , पञ्चेन्द्रिया अप्यसञ्ज्ञिसञ्ज्ञिभेदाद् द्विविधा , समूर्च्छजा गर्भजाश्चेत्यर्थ, तेऽपि प्रत्येक द्विभेदा -पर्याप्तका इतरे वा-अपर्याप्तकाश्चेति, तदनेन "एगिदियसुहुमियरा सण्णियरपणिदिया य सवितिचऊ। पज्जत्तापज्जता भेएण चउदसग्गामा॥१॥" इति स्थानान्तरे यश्चतुर्दशधा भूतग्राम प्रोक्त स इहेन्द्रियाणामाश्रयत्वेनोक्तो विज्ञेय । तदित्थमिन्द्रियभणनप्रक्रमेण तदाश्रयभूतान् चतुर्दशविधानेकेन्द्रियादिजीवानभिधाय साम्प्रत तेष्वेव ये यत्र यावन्तो जीवसमासा सभवन्ति तान् तत्र तावतो दर्शयन्नाह-'पंचिंदिएसु' इत्यादि, पञ्च इन्द्रियाणि येषा ते पञ्चेन्द्रिया॰ पर्याप्तापर्याप्तसञ्ज्ञ्यसञ्ज्ञिपञ्चेन्द्रियरूपास्तेषु मिथ्यादृष्ट्यादिगुणस्थानरूपाश्चतुर्दशापि जीवसमासा प्राप्यन्ते, पञ्चेन्द्रिया हि सामान्येन नारकादयो मनुष्याश्चोच्यन्ते, तेषु च मिलितेषु यथोक्तानि चतुर्दशापि गुणस्थानानि लभ्यन्त एवेति भाव , शेषा पुन

सूक्ष्मापर्याप्तैकेन्द्रियादयो दशापि जीवभेदा मिथ्यादृष्टय एव, तथाविधविशुद्ध्यभावत शेषगुणस्थानाना तेष्वसम्भवादित्यत आह-ननु करणापर्याप्तेषु बादरपृथिव्यब्वनस्पतिषु करणापर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियेषु च सास्वादनसम्यग्दृष्टि प्राप्यते स कस्मान्नोक्त ?, सत्य, किन्तु स्वल्पकालभावित्वान्न तस्येह गणना कृता, यदिवाऽनन्तानुबन्ध्युदयकलुषितत्वात् प्रत्यासन्नीकृतमिथ्यात्वोदयत्वाच्च मिथ्यादृष्टित्वेनैवायमिह विवक्षित इत्यदोष इति गाथाद्वयार्थ ॥ २४ ॥ आह-नन्वत्र सार्द्धगाथया सूक्ष्मबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियसज्ञ्यसञ्ज्ञिपञ्चेन्द्रियलक्षणा सप्तापि जीवभेदा पर्याप्तापर्याप्तविशेषणाभ्या विशेषिताश्चतुर्दशविधत्वेनोक्ता. तत्कास्ता पर्याप्तयो यद्योगात्पर्याप्ता भवति यद्वैकल्यात्त्वपर्याप्तत्वमासादयन्तीत्याशङ्क्य प्रसङ्गत पर्याप्तिस्वरूपनिरूपणायर्थमाह—

**आहारसरीरिंदियपज्जत्ती आणपाण भासमणे । चत्तारि पंचछप्पिय एगिंदियविगलसण्णीण ॥ २५ ॥**

इहाहारादिपुद्गलग्रहणपरिणमनहेतु शक्तिविशेष पर्याप्ति, सा च साध्यभेदात्पोढा, तद्यथा-ययाऽऽहारपुद्गलानादाय खलरसरूपतया परिणमयति साऽऽहारपर्याप्ति १, यया तु रसीभूतमाहार रसासृग्मासमेदोऽस्थिमज्जाशुक्ररूपसप्तधातुतया परिणमयति सा शरीरपर्याप्ति २, यया तु धातुभूतमाहरमिन्द्रियतया परिणमयति सेन्द्रियपर्याप्ति ३, यया त्वानापानवर्गणाद्रव्यमादायानापानत्वेन परिणमय्य मुञ्चति साऽऽनापानपर्याप्ति ४, यया पुनर्भाषावर्गणाद्रव्यमादाय भाषारूपतया परिणमय्य मुञ्चति सा भाषापर्याप्ति ५, यया तु मन प्रायोग्यवर्गणाद्रव्यमादाय मनस्त्वेन परिणमय्य मुञ्चति सा मन पर्याप्ति ६, तदेव गाथापूर्वार्द्धमध्योपात्तपर्याप्तिशब्दस्य सर्वत्र योजनात् षट् पर्याप्तयोऽवगन्तव्या । आह-किं सर्वेषामपि जीवाना सर्वा अप्येता पर्याप्तय प्राप्यन्ते ? नेत्याह—' **चत्तारि** ' इत्यादि, इह यथासङ्ख्येन सम्बन्ध, तद्यथा-आद्याश्चतस्र एकेन्द्रियाणा, भाषामनसोस्तेष्वभावात्, विकलशब्देन चात्र मनोविकला गृह्यन्ते, ते च पारिशेष्यात् द्वित्रिचतुरिन्द्रिया असञ्ज्ञिपञ्चेन्द्रियाश्च लभ्यन्ते, तेषामाद्या पञ्चैव पर्याप्तयो, न तु मन पर्याप्तिर्मनसस्तेष्वभावादिति, सञ्ज्ञिपञ्चेन्द्रियाणा पुन षडपि पर्याप्तय प्राप्यन्ते, मनसोऽपि तेषा सद्भावादिति गाथार्थ ॥ २५ ॥ उक्तं सप्रसङ्गमिन्द्रियद्वारमथ कायद्वारमाह—

पुढविदगअगणिमारुय साहरणकाइया चउद्धा उ। पत्तेय तसा दुविहा चोद्दस तस सेसिया मिच्छा ॥ २६ ॥

पृथिव्युदकाग्निवायुकायिकास्तथा वनस्पतयोऽपि ये साधारणकायिका निगोदस्वरूपा इत्यर्थ. एते पञ्चापि प्रत्येकं चतुर्द्धा भवन्ति, सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदात्, पृथगेते पञ्चापि कायाश्चतुर्विधा भवन्तीत्यर्थ, ये तु प्रत्येकस्वरूपा निम्बाम्रकोसम्बजम्बूप्रभृतयो वनस्पतयस्तथा द्वित्रिचतुष्पञ्चेन्द्रियरूपास्त्रसकायिका, एते प्रत्येकं पर्याप्तापर्याप्तकभेदाद् द्विविधा एव, सूक्ष्मबादरलक्षणं तु भेदद्वयमत्र न सम्भवति, बादरनामकर्मोदयाद्, बादरत्वादेवामीषामिति भाव । तदेवं पृथिव्यादीन् कायान् निरूप्य तेषु जीवसमासाश्चिन्तयन्नाह-'चोद्दस' त्यादि, यथोक्तस्वरूपेषु त्रसकायिकेषु सामान्यचिंतया चतुर्दशापि गुणस्थानलक्षणा जीवसमासा प्राप्यन्ते, विशेषचिन्ता तु स्वयमभ्यूह्य कर्तव्या, शेषास्तु प्रत्येकवनस्पतिकायपर्यन्ता सर्वेऽपि मिथ्यादृष्टय एव, तथाविधविशुद्धयभावेन शेषगुणस्थानकानामभावात्, करणापर्याप्तबादरपृथ्वीकायिकादिषु सास्वादनसम्यग्दृष्टयभणनकारणं पूर्वोक्तमेवेति गाथार्थ ॥ २६ ॥ आह-नन्वत्र बादरपृथिवीकायिकादय पर्याप्तापर्याप्तभेदद्वयभिन्ना प्रोक्तास्तत्किमेतदेव भेदद्वयममीषां संभवत्याहोस्विदन्येऽपि भेदाः सन्ति ? इति, अत्रोच्यते, सन्त्यन्येऽपि भेदा, केवलं स्थानान्तरे तेषां विस्तरेणोक्तत्वादिह तु दिग्मात्रस्यैव दिदर्शयिषितत्वात्सर्वे नोक्ता, कथं पुन स्थानान्तरे तेऽभिहिताः ?, उच्यते, बादरपृथिवीकायिका द्विविधा प्रज्ञप्तास्तद्यथा-श्लक्ष्णबादरपृथ्वीकायिका खरबादरपृथ्वीकायिकाश्च, तत्र कृष्णनीललोहितपीतशुक्लमृत्तिकापनकमृत्तिकापाण्डुमृत्तिकाभेदत श्लक्ष्णबादरपृथ्वीकायिका सप्तविधा, तत्रेषच्छुभ्रा मृत्तिकैव या 'पाडुय' त्ति लोके प्रतीता सा पाण्डुमृत्तिकेत्युच्यते, अस्याश्च शुक्लमृत्तिकाग्रहणेन सङ्ग्रहेऽपि भेदेनोपादानं कृष्णादिमृत्तिकानामपि स्वस्थाने वर्णादितारतम्यात्कृष्ट्देवबहुविधत्वसूचनार्थमिति, पनको-नभसि विवर्तमानात्यन्तसूक्ष्मरजोरूप स एव मृत्तिका पनकमृत्तिका, मरुषु पर्पटिकेति रूढा, चरणाभिघाते सति या झगित्युज्जृम्भते सा पनकमृत्तिकेत्यन्ये, जलाश्रितपङ्करूपेत्यपरे । खरबादरपृथ्वीभेदान् पुनर्विनेयजनानुग्रहार्थ प्रसङ्गत सूत्रकार स्वयमेवाह —

पुढवी य सक्करावालुया य उवले सिला य लोणूसे। अयतंबतउयसीसय रुप्पसुवण्णे य वइरे य ॥ २७॥

हरियाले हिंगुलए मणसिला सासगंजणपवाले। अब्भपडलऽब्भवालुय वायरकाए मणिविहाणा ॥ २८ ॥

पृथ्व्यादिषु जीवस-पृथ्वी-भेदा. गा. २६-७-८

एकदेशेन समुदायस्य गम्यमानत्वात्पृथ्वीशब्देनेह शुद्धपृथिवी गृह्यते, या कर्करायुत्तरभेदरूपा न भवतीत्यर्थः, चशब्द उत्तरभेदापेक्षया समुच्चये, कर्करा-लघूपलशकलरूपा, वालुका च प्रतीता उपलो-गण्डशैलादि शिला च दृषत्स्वरूपा लवणं प्रतीतम् उषो-वस्त्रशुद्धिहेतु क्षारमृत्तिकाविशेष, अयस्ताम्रत्रपुसीसकरूप्यसुवर्णानि च विदितानि, नवरमेतेषा सम्बन्धिनो धातव एवेह ग्रहीतव्या न पुनर्लोके व्यवह्रियमाणा अय पिण्डादय, तेषा अग्न्यादिशस्त्रोपहतत्वेनाचेतनत्वात् सचित्तपृथ्वीभेदाना चेह प्रस्तुतत्वादिति, सदा तेषु तत्सत्त्वादर्शनार्थं चैवमभिधानं, धात्ववस्थायामपि ह्येतान्ययस्ताम्रादीनि सन्त्येव, वह्न्यादिसामग्रीवशात्तु मलविगमतो विशिष्टस्वरूपाविर्भाव एवामीषा नन्वयत इति, वज्रश्च-हीरक, हरितालो हिङ्गुलको मन शिलेति च प्रतीता एव, सीसकश्च-धातुविशेष, अञ्जन-सौवीराञ्जनस्वरूप, प्रवाल च विद्रुम, अभ्रपटलं-जनविदितमेव श्लक्ष्णाभ्रपटलोन्मिश्रा वालुकाऽभ्रवालुका, खरबादरपृथ्वीकायेऽमी भेदा इति शेष, चस्य गम्यमानत्वान्न केवलमेते, 'मणिविधानानि च' मणिभेदाश्चेह द्रष्टव्या इति गाथाद्वयार्थ ॥ २८ ॥

कानि पुनस्तानि मणिविधानानि ? इत्याह—'**गोमेज्जए ये**' त्यादि,

**गोमेज्जए य रुयए अंके फलिहे य लोहियक्खे य। चंदप्पह वेरुलिए जलकंते सूरकंते य ॥ २९ ॥**

**गेरुय चदण वधगे भुयमोए तह मसारगल्ले य। वण्णाईहि य भेदा सुहुमाण नत्थि ते भेया ॥ ३० ॥**

गोमेज्जकश्च रुचकाह्व अङ्क स्फटिको लोहिताक्षश्च चन्द्रप्रभो वैडूर्यो जलकान्त सूर्यकान्तश्चेति ॥ गेरुकश्चन्दनो वधको भुजमोचकस्तथा मसारगल्लश्चेति, एतेऽपि सर्वे खरबादरपृथ्वीकायभेदा । आह-ननु च अन्यत्रैतानि मणिविधानान्येव पठ्यन्ते—" गोमेज्जए य रुयए अंके फलिहे य लोहियक्खे य। मरगय मसारगल्ले भुयमोयग इंदनीले य ॥ १ ॥ चदण गेरुय हसग पुलए सोगधए य वोद्धव्वे। चदप्पह वेरुलिए जलकंते सूरकंते य ॥ २ ॥" तत्कथमत्रैव पठितानि ?, सत्यं, किन्तु परस्पर कस्यचित्कथञ्चित् क्वचिदन्तर्भावादविरोधो भावनीयस्तत्त्व तु बहुश्रुता एव विदन्तीति, एतेषा च खरबादरपृथ्वीकायिकाना सर्वेषामपि यथोक्तभेदेभ्योऽन्येऽपि वर्ण-

गन्धरसस्पर्शादिभिरनेकप्रकारा भेदा मन्तव्या,' ये तु सूक्ष्मनामकर्मोदयात्सूक्ष्मा समस्तलोकव्यापिन पृथ्वीकायिकास्तेषा त 'पुढवी य सक्करा वालुया ये'त्यादिग्रन्थोक्ता वर्णादिजनिताश्चेन्द्रियग्राह्या भेदा न सन्ति, सूक्ष्मत्वादेव, तत पर्याप्तापर्याप्तभेदद्वयमात्रेणैव ते पूर्वमुक्ता इति गाथाद्वयार्थ ॥ ३० ॥ अथ बादराप्कायभेदनिरूपणार्थमाह—

ओसा य हिमं महिगा हरतणु सुद्धोदए घणोए य। वण्णाईहि य भेया सुहुमाणं नत्थि ते भेया ॥ ३१ ॥

शरदादिषु पश्चिमरजन्यादिसमयभावी सूक्ष्मवर्षोऽवश्याय हिम प्रतीत महिका-गर्भमासभाविनी सूक्ष्मवृष्टिरूपेव धूमिका, हरतनु-सस्नेहपृथिवीमुद्भवस्तृणाग्रस्थितो जलबिन्दुरूप शुद्धोदक-समुद्रमहाह्रदबहुमध्यभागवर्त्ति जल घनोदक तु घनोदधिनीरं, इद च दशवैकालिकाद्युपात्ताना शीतान्तरिक्षोदककरकादीनामुपलक्षण द्रष्टव्यं, 'वण्णा-ईहि य भेये'त्याद्युत्तरार्द्धं पूर्ववद्व्याख्येय, नवर पृथ्वीकायस्थानेऽप्कायो वाच्य इति गाथार्थ ॥ ३१ ॥ अथ बादरतेजस्कायभेदनिरूपणार्थमाह—

इंगाल जाल अच्ची मुम्मुर सुद्धागणी य अगणी य। वण्णाईहि य भेया सुहुमाणं नत्थि ते भेया ॥ ३२ ॥

अत्र ज्वलितविधूमकाष्ठरूपोऽङ्गार अयस्पिण्डाद्यनुविद्धो ज्वालादिरहितोऽग्निरङ्गार इत्यन्ये, ज्वाला-अग्निसंबद्धशिखारूपा, अग्न्यप्रतिबद्धत्रुटितशिखास्वरूपा त्वर्चि, एतयोरेव ज्वालार्चिषो स्वरूपमन्ये व्यत्ययेन व्याचक्षते, भस्ममिश्रविरलाग्निकणा मुर्मुर, 'शुद्धाग्नि' विद्युदग्नि, ज्वलितविधूमाङ्गारस्त्व इत्यपरे, उक्तभेदातिरिक्त-स्त्वग्नि महानगरदाहेष्टकापाकसम्भव इत्यन्ये, अत्र पक्षे उपलक्षणमिदमुल्मुकोल्कादीनां, उत्तरार्द्धं पूर्ववदिति गाथार्थ ॥ ३२ ॥ बादरवायुकायभेदानाह—

वाउब्भामे उक्कलिमंडलिगुंजा महा घणतणू या। वण्णाईहि य भेया सुहुमाणं नत्थि ते भेया ॥ ३३ ॥

अस्रोक्तभेदातिरिक्तो मन्दानिलादिर्वात य ऊर्द्ध्वं वाति स उद्भ्रामवात, यस्तु स्थित्वा २ वाति स उत्कलिकावात, वातालीरूपो मण्डलिवात, गुञ्जन् यो वाति

'पूर्वोक्ताना पृथ्वीभेदाना पार्थक्ये हेतुरयं, सर्वेषामत्रैवान्तर्भाव शेषभेदानामिति मूलकाराशय, अत एव च सूक्ष्मेषु भेदाभावमाह, अन्यथा वर्णाभिदव्याप्त्येन सूक्ष्मेष्वपि, न हि तेऽपि सर्वे एकवर्णगन्धरसस्पर्शा

अप्कायादिजीवायुभेदा गा. ३१-३

स गुञ्जावात, 'मह' त्ति ग्रन्धादीन् भञ्जन् यो वाति स महावात इत्यर्थ, घनवाततनुवातौ तु घनोदध्याद्याधारभूतौ प्रतीतावेव, वातशब्दश्चेह प्रक्रमलब्ध सर्वत्र योजित, सर्वत्तरान्योऽपि भेदा मन्यत्र पठिता दृश्यन्त तेषामिहादावुपात्तवातशब्देन सङ्ग्रहो द्रष्टव्य, तत्र यो बहि स्थितमपि तृणादिक मध्ये-क्रोडीकृत्य विवक्षितदेशान्त क्षिपति स मण्डलिकावात, वर्गादीन्याद्वि पूर्ववदिति गाथार्थ ॥ ३३ ॥ बादरवनस्पतिभेदानाह—

मूलग्गपोरबीया कंदा तह खंधबीय बीयरुहा । संमुच्छिमा य भणिया पत्तेय अणंतकाया य ॥ ३४ ॥

मूल बीज येषा ते मूलबीजा उत्पलकन्दकदल्यादय, अग्र बीज येषा तेऽग्रबीजा —कोरण्टकनागवल्ल्यादय, पर्व बीज येषा ते पर्वबीजा-इक्ष्वादय 'कंद' त्ति अत्रापि बीजशब्द सम्बध्यते, कन्दो बीज येषा ते कन्दबीजा —सूरणादय, 'खंधबीय' त्ति स्कन्धो बीजं येषा ते स्कन्धबीजा -शल्लकीपारिभद्रादय 'बीजरुह' त्ति बीजाद्रोहन्तीति बीजरुहा:-शालिमुद्गादय, समूर्च्छन्ति-तथाविधप्रसिद्धबीजाभावेनैव दग्धभूम्यादावपि सभवन्तीति समूर्छिमा -तृणादय, के पुनर्वनस्पतयो मूलबीजादिभेदेन प्रतिपत्तव्या ? इत्याह—'पत्तेय' त्ति एकमेक प्रति प्रत्येक-एकैकशो निभिन्न शरीर तद्योगाज्जीवा अपि वनस्पतयो मुद्गादयोऽत्र प्रत्येका ' प्रोक्ता, एषा हि यदेकस्य शरीरं न तदन्यस्य, अभिन्नप्रतिभागास्तु शरीराणा सर्षपवर्त्या सर्षपाणामिव तथापरिणते, उक्तञ्च—"जह सगलसरिसवाण सिलेसमिस्साण वत्तिया वत्ती । पत्तेयसरीराण तह हुति शरीरसघाया ॥ १ ॥ जह वा तिलसक्कुलिया बहुएहि तिलेहि मलिया सती । पत्तेयसरीराण तह हुति शरीरसघाया ॥ २ ॥" अनन्तानां जीवानामेक काय —शरीर येषु तत्पतिषु तेऽनन्तकाया, एते प्रत्येका अनन्तकायाश्च वनस्पतयो मूलबीजादिभेदभिन्ना सभवन्त्येवेति गाथार्थ ॥ ३४ ॥ अथ कन्दादिप्राधान्येन वनस्पतिभेदानाह—

कंदा मूला छल्ली कट्ठा पत्ता पवाल पुप्फ फला । गुच्छा गुम्मा वल्ली तणाणि तह पव्वया चेव ॥ ३५ ॥

इह कन्दप्रधाना वनस्पतय कन्दशब्देन विवक्षिता, ते च सूरणादयस्तेषां हि कन्दा एव बहुजीवा, त एव च लोके बहूपकारिणस्तद्विनाशे च सर्वस्य तत्सबद्धवनस्पतेर्विनाश, एवमन्यत्रापि यत्र यत्र प्रभवति तत्तत् प्राधान्यकारणमभ्यूह्य, ततश्च मूलप्रधाना एरण्डादय छल्ली त्वक् तत्प्रधाना कदल्यादय काष्ठ-त्वगभ्यन्तरवर्ति-

तत्प्रधाना· खदिरादय पत्रप्रधाना-नागवल्ल्यादय प्रवालसारा-अशोकादय पुष्पैकसारा-जात्यादय फलसारा-बदरीप्रभृतयस्तत्तच्छब्दवाच्यत्वेन इह विवक्षिता, गुच्छ-समुदाय एकस्मिन्नेव स्थानके बहूना प्ररोहस्तत्प्रधाना वृन्ताक्यादयो गुच्छा, एकस्मिन्नेव प्रथमप्ररूढलतामूलेऽन्यासा बह्वीना प्ररोहणान्निविड लताजाल गुल्म तत्प्रधाना नवमालिकादयो गुल्मा, वल्ल्य त्रपुष्यादय, तृणानि-श्यामाकादीनि पर्वाणि-सन्धयस्तेभ्यो जाता पर्वजा-इक्ष्वादय, इह च वल्लीतृणपर्वजाना यद्यपि पूर्वोक्तेषु बीजरुहसमूर्छजपर्वबीजादिषु फलप्रधानादिषु वा कस्यचित्क्वचिदन्तर्भाव सम्भवति तथाऽपि पौनरुक्त्य नाशङ्कनीय, पूर्वोक्तस्य सामान्यरूपत्वादस्य तु विशेषाभिधानत्वादिति, इह च शास्त्रान्तरेष्वन्येऽपि वनस्पतिभेदा उक्ता दृश्यन्ते, ततश्चानोक्तानामुपलक्षणत्वात्तेऽपीह द्रष्टव्यास्तद्यथा-वृक्षाश्रितादय लता चम्पकलतादय, लतावलयानि-नालिकेरीप्रभृतीनि, एषा हि शाखान्तराभावाल्लतारूपता, त्वचो-वलयाकारत्वेन च वलयस्वभावता, कुहुणा-भूमिस्फोटकविशेषा सर्पच्छत्रादय जलरुहा—पद्मादय ओषधितृणानि-शाल्यादीनि हरितकायाः तन्दुलेयकादय, इत्याद्यपरेऽपि समयानुसारतो द्रष्टव्या इति गाथार्थ ॥ ३५ ॥ तदेव प्रोक्ता सामान्येन बादरवनस्पतेर्भेदा, साम्प्रत विशेषत साधारणवनस्पतिगतान् भेदानाह—

**सेवालपणगकिण्हग कवया कुहुणा य बायरो काओ। सव्वो य सुहुमकाओ सव्वत्थ जलत्थलागासे ॥ ३६ ॥**

सेवालो-जलोपरिवर्त्ती प्रतीत एव पनक-काष्ठाद्याश्रित उल्लीविशेष किन्नको-जलघटाद्यभ्यन्तरवर्त्ती प्राय प्रावृट्कालसम्भवी उल्लीविशेष एव 'कवय' त्ति भूमिस्फोटा 'कुहण' त्ति सर्पच्छत्रकादिरूपा भूमिस्फोटविशेषा एव, एते च कवया कुहुणाश्चान्यत्र प्रत्येकवनस्पतिष्वर्थतो दृश्यन्ते, इह तु साधारणतया निर्दिष्टा इत्यत्र तत्त्व केवलिन समवगच्छन्तीति, एष च सर्वोऽपि सेवालादिको बादरसाधारणवनस्पतिकाय, सूक्ष्मस्तु साधारणवनस्पतिकाय सर्वोऽपि सर्वत्र सामान्यतश्चतुर्दशरज्ज्वात्मके लोके भवति, विशेषतोऽपि जलस्थले आकाशे चानैयत्येन तिष्ठति, बादरस्तु साधारणवनस्पतिकायो नियतपृथिवीजलादिस्थानाश्रित एव भवतीति भाव इति गाथार्थ. ॥ ३६ ॥ इह च सिद्धान्ते 'आलुए मूलए सिंगबेरे' इत्यादिना बादरसाधारणवनस्पतेर्बहवो भेदा प्रोक्ता सूचिताश्च, इह तु शेवालादय कतिचिदेव भेदा प्रदर्शिता अतः शेषभेदाना सर्वेषामपि सङ्ग्रहा र्थ बादरसाधारणवनस्पते सर्वस्यापि सामान्यलक्षणमाह—

**गूढसिरसंधिपव्वं समभंगमहीरयं च छिन्नरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥ ३७ ॥**

इह यस्य पत्रकाण्डनालशाखादेर्गूढा-अलक्ष्यमाणा शिरा भवन्ति सन्धय पर्वाणि च गूढानि भवन्ति तथा यस्य भज्यमानस्य गात्रादेस्त्रोट्यमानस्य च पत्रादे. सम-अदन्तुरो भङ्ग-छेद सम्पद्यते हीरकश्च-तन्तुलक्षणो मध्ये न भवति, तथा छित्वा गृहायानीत शुष्कताद्यवस्थाप्राप्तमपि च जलादिसामग्री प्राप्य गुडूच्यादिवत्पुनरपि यत् प्ररोहति तच्छिन्नरुहं, तदेतत्सर्वमेतल्लक्षणविशिष्टमुक्तशैवलादिभेदेभ्योऽन्यदप्यनन्ताना जीवाना साधारण शरीर प्रतिपत्तव्य, तद्विपरीत तु प्रत्येकशरीर, उपलक्षण चैतदन्यस्यापि लक्षणस्य, यदाह—"चक्काग भज्जमाणस्स, गंठी चुण्णघणो भवे । पुढविसरिसेण भेएण, अणंतजीवं वियाणाहि" ॥ १ ॥ अयमर्थ - अदन्तुरतया कुम्भकारचक्राकार सम यथा भवत्येव भज्यमानस्य ग्रन्थि शुभ्रचूर्णघनो भवति-यस्य भज्यमानस्य ग्रन्थे शुभ्रो घनश्चूर्ण उड्डीयमानो दृश्यते, स वनस्पतिरनन्तजीवाना साधारण शरीरमित्यर्थ, कथ पुनरसौ सम भज्यते ? इत्यत्र दृष्टान्तमाह—पृथ्वीसदृशभेदेन, अत्र पृथ्वी केदाराद्युपरिवर्तिशुष्कपर्पटिका अन्याखटिकानिर्मितवर्त्तिका वा गृह्यते, यथा तस्या भज्यमानाया. सम-अदन्तुरो भेदो भवति एव वनस्पतिरपि चक्राकार सम यो भज्यत इति भाव इति गाथार्थ ॥ ३७ ॥ तदेव निरूपिता पञ्चापि पृथ्वीकायिकादय स्थावरा, अथ त्रसकायनिरूपणार्थमाह—

**दुविहा तसा य वुत्ता वियला सयलिंदिया मुणेयव्वा । बितियचउरिंदिया वियला सेसा सयलिंदिया नेया ॥ ३८ ॥**

शीतवातातपाद्यभिलाषिणस्त्रस्यन्ति-चलन्तीति त्रसा, ते पुन 'द्विविधा' द्विप्रकारा प्रोक्ता, ते च विकला सकलेन्द्रियाश्च 'मुणितव्या' ज्ञातव्या, तत्र पञ्चलक्षणामिन्द्रियसङ्ख्यामाश्रित्य 'विकला' असम्पूर्णा-हीनेन्द्रियसङ्ख्या द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया, शेषास्तु त्रसकाये ये उद्धरितास्ते सकलेन्द्रिया ज्ञातव्या, पञ्चलक्षणा सङ्ख्यामाश्रित्य सकलानि सम्पूर्णानीन्द्रियाणि येषा ते सकलेन्द्रिया इति गाथार्थ ॥ ३८ ॥ के पुनस्ते द्वीन्द्रियादय ? इत्याह—

**संखा गोम्मी भमराइया उ विगलिंदिया मुणेयव्वा । पञ्चिंदिया य जलथलखहयरसुरनारयनरा य ॥ ३९ ॥**

इह शङ्खादिष्वादिशब्दः प्रत्येकमभिसम्बध्यते, ततश्च शङ्खादयो द्वीन्द्रिया गोमी-कर्णशृगाली तत्प्रभृतयस्त्रीन्द्रिया भ्रमरादयश्चतुरिन्द्रिया, एते तावत्सर्वेऽपि विकलेन्द्रिया मुणितव्या, ये तु सकलेन्द्रियतयाऽनन्तरमुद्दिष्टा पञ्चेन्द्रियास्ते जलचरादयो विज्ञेया, तत्र जले चरन्ति-पर्यटन्तीति जलचरा-मत्स्यमकरादय एव, स्थलचरा गो-गवयप्रभृतय, खचरा काकबकादय, सुरा भवनपत्यादय, नारका-रत्नप्रभोत्पन्नादय, नराश्च कर्मभूमिजादय इति गाथार्थ ॥ ३९ ॥ तदेव कायद्वारस्य प्रस्तुतत्वान्निरूपित-पृथिव्यादिभेदत षड्विधोऽपि जीवनिकाय, तत्र च समस्तजन्तूना सातिरेका कोटिकोटी कुलाना सचित्ताचित्तादिभेदभिन्नानि चतुरशीतिर्लक्षाणि योनीना षट् संहननानि षट् च संस्थानानीत्यादयोऽनेके भावाः सम्भवन्ति, तत्र कुलाद्यभिधाने सविशेष किञ्चिच्छिष्योपकार पश्यन् प्रासङ्गिकमिदमाह—

**वारस सत्त य तिन्नि य सत्त य कुलकोडि सयसहस्साइं । नेया पुढविदगागणिवाऊण चेव परिसंखा ॥ ४० ॥**

इह कुलकोटिशतसहस्रशब्द प्रत्येकमभिसम्बध्यते, द्वादश कुलकोटिशतसहस्राणि सप्त कुलकोटिशतसहस्राणीत्यादि, कुलान्याश्रित्य परिसङ्ख्यान-परिसङ्ख्या 'ज्ञेया' ज्ञातव्येति सम्बन्ध, केषाम् ? इत्याह—'पुढवी' त्यादि, यथासङ्ख्य चेह योजना, तद्यथा-द्वादश कुलकोटिशतसहस्राणि पृथ्वीकायिकाना ज्ञेयानि, उदकजीवाना सप्त, अग्निकायिकाना त्रीणि, वायूना पुन सप्तैव कुलकोटिशतसहस्राणि कुलसङ्ख्या ज्ञेयेति गाथार्थ ॥ ४० ॥ तथा —

**कुलकोडिसयसहस्सा सत्तट्ठ य नव य अट्ठवीसं च । वेइंदियतेइंदिय चउरिंदिय हरियकायाणं ॥ ४१ ॥**

द्वीन्द्रियाणा सप्त कुलकोटिलक्षाणि त्रीन्द्रियाणामष्टौ चतुरिन्द्रियाणा नव 'हरितकायाना' समस्तवनस्पतीनामष्टाविंशति कुलकोटिलक्षाणि भवन्तीति गाथार्थ ॥ ४१ ॥ तथा—

**अद्धत्तेरस वारस दस दस कुलकोडिसयसहस्साइं । जलयर पक्खि चउप्पयउरभुयसप्पाण नव हुंति ॥ ४२ ॥**

जलचराणा-पूर्वनिर्दिष्टस्वरूपाणा सार्द्धानि द्वादश कुलकोटिलक्षाणि भवन्ति, पक्षिणा तु द्वादश, चतुष्पदोर परिसर्पभुजपरिसर्पभेदत स्थलचरास्त्रिविधा, तत्र

चतुष्पदाना-गजगर्दभादीना दश कुलकोटिलक्षाणि, उरःपरिसर्पाणामपि भुजङ्गमादीना दशैव, भुजपरिसर्पाणा तु गोधानकुलादीना नव कुलकोटिलक्षाणि भवन्तीति गाथार्थ ॥ ४२ ॥ अपरञ्च—

**छव्वीसा पणवीसा सुरनेरइयाण सयसहस्साइं । बारस य सयसहस्सा कुलकोडीण मणुस्साणं ॥ ४३ ॥**

सर्वेषा भवनपत्यादिसुराणा षड्विंशति कुलकोटिलक्षाणि, नारकाणा तु पञ्चविंशति मनुष्याणा पुनर्द्वादश कुलकोटिलक्षाणि भवन्तीति गाथार्थ ॥ ४३ ॥

अथ पूर्वोक्तानामेव कुलाना मीलयित्वा सर्वसङ्ख्यामाह—'एगे' त्यादि,

**एगा कोडाकोडी सत्ताणउई भवे सयसहस्सा । पन्नासं च सहस्सा कुलकोडीणं मुणेयव्वा ॥ ४४ ॥**

गतार्थैव ॥ ४४ ॥ इदानी योनयो निरूप्यन्ते, तत्र 'यु मिश्रणे' युवन्ति-भवान्तरे सङ्क्रमणकाले तैजसकार्मणशरीरवन्त सन्त औदारिकादिशरीरयोग्यस्कन्धद्रव्यै सह मिश्रीभवन्ति जीवा अस्यामिति योनि, एकेन्द्रियादिजीवानामुत्पत्तिस्थानमित्यर्थ, तासा च योनीना समस्तजन्तूनाश्रित्य चतुरशीतिलक्षाणि भवन्तीति, न च वक्तव्यमनन्ताना जीवानामुत्पत्तिस्थानान्यप्यनन्तानि प्राप्नुवन्ति, यतो जीवाना सामान्याधारभूत लोकोऽप्यसङ्ख्येयप्रदेशात्मक एव, विशेषाधारस्थानान्यपि नरकनिष्कुटदेवशयनीयप्रत्येकसाधारणजन्तुशरीरादीन्यसङ्ख्येयान्येवेति, अतो जीवानामानन्त्येऽपि कथमुत्पत्तिस्थानानामानन्त्य भवतु, तदसङ्ख्येयानि ? इति चेन्, नैव, यतो बहून्यपि तानि केवलिदृष्टेन केनचिद्धर्मेण सदृशान्येकैव योनिरिष्यते, ततोऽनन्तानामपि जन्तूना केवलिविवर्जितसादृश्यत परस्परान्तर्भावचिन्तया चतुरशीतिलक्षसङ्ख्या एव योनयो भवन्ति, न हीनाधिका, ताश्चेह सूत्रेऽतिप्रतीतत्वादनिर्दिष्टा अपीत्य प्रतिपत्तव्या -"पुढविदगअगणिमारुय एक्केके सत्तजोणिलक्खा उ । वणपत्ते य अणंते दस चउदस जोणिलक्खा उ ॥ १ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु । पंचिदि तिरिय चउरो चउदस लक्खा उ मणुएसु ॥ २ ॥" आह-ननु योनिकुलयो क प्रतिविशेष ?, उच्यते, योनि -उत्पत्तिस्थान यथा वृश्चिकादेर्गोमयादि, कुल तु वर्णादिभेदस्वरूप, तच्चैकयोन्युत्पन्नानामपि बहुविधं संभवति, यथा तस्यैव वृश्चिकादेर्गोमयाद्येकयोन्युत्पन्नस्यापि

कुलकोटीसङ्ख्या गा ४३-४

॥ ३१ ॥

कपिलरक्तादिवर्णभेदात्कुलानेकविधत्वमित्यल विस्तरेण, एता एव योनी संवृतविवृतादिधर्मभेदेन सूत्रकार स्वयमेव निरूपयन्नाह —

**एगिंदियनेरइया संवुडजोणी य हुंति देवा य। विगलिंदियाण वियडा संवुडवियडा य गब्भंमि ॥ ४५ ॥**

एकेन्द्रिया नारकाश्च संवृतयोनय, तत्र नारका कथं संवृतयोनय, ?, उच्यते, तदुत्पत्तिस्थानभूताना निष्कुटाना गवाक्षकल्पत्वात्, देवा अपि सर्वे संवृतयोनय एव 'देवसयणिज्जंसि देवदूसंतरिए अंगुलस्स असंखेज्जइभागमित्ताए सरीरोगाहणाए उववज्जइ' इत्यादिवचनत पटप्रच्छादितेषु देवशयनीयेषु देवदूष्याभ्यन्तरे संवृतस्वरूपे तेषामुत्पादात्, एवमेतदनुसारत: एकेन्द्रियाणामपि सर्वथा केवलिदृष्टेन केनापि प्रकारेण संवृतयोनित्व भावनीय, विकलेन्द्रियग्रहणेनेह द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियास्तथा समूर्च्छजपञ्चेन्द्रियतिर्यग्मनुष्याश्च गृह्यन्ते, एषामपि मनोविकलत्वेन विशिष्टसम्पूर्णेन्द्रियकार्याकरणात्परमार्थतो विकलेन्द्रियत्वात्, तत्रैषां द्वीन्द्रियादीना सर्वेषामपि विवृता केवलिगम्येनैव केनापि प्रकारेणागुप्तस्वरूपा योनिर्मन्तव्या, गर्भ तु ये जीवा पञ्चेन्द्रियतिर्यग्मनुष्या समुत्पद्यन्ते तेषां संवृतविवृता योनि, आवृतानावृतस्वरूपेत्यर्थ, तत्रापि भावनाऽतीन्द्रियज्ञानगम्यैव, केवल मनुष्ययोनिस्वरूपमिदं पूर्वसूरिभिर्लिखितमवलोक्यत, तथा स्त्रीणा नाभेरध शिराद्वयस्यान्तरधोमुखस्थितकोशाकारा योनि, तस्याश्च बहिश्चूतमञ्जरिरूपा मांसस्फोटका ऋतुकाले स्फुटन्ति, तेभ्य शोणित गलति, तत्र केचन रक्तावयवा योनेरन्तर्विशन्ति, तांश्च पुरुषशुक्रसम्पृक्तानाश्रित्य जीव समुत्पद्यते, तत्र च कललार्बुदमांसपेश्यादिक्रमेण सर्वावयवनिष्पत्तौ तत योनेर्निर्गच्छतीति गाथार्थ ॥ ४५ ॥

**अच्चित्ता खलु जोणी नेरइयाणं तहेव देवाणं। मीसा य गब्भवसही तिविहा जोणी उ सेसाणं ॥४६ ॥**

नारकाणा च देवाना योनिरचित्तैव, सत्यपि सूक्ष्मैकेन्द्रियव्यापकत्वे तदुपपातक्षेत्रस्य केनापि जन्तुनाऽपरिगृहीतत्वेनाऽचेतनत्वात, गर्भशब्देनेह गर्भजप्राणिनो विवक्षितास्तेषां वसति-योनि 'मिश्रा' चेतनाचेतनस्वरूपा भवति, अचित्तानां शुक्रशोणितादिपुद्गलाना तत्र सद्भावात् सचित्ताना तु योनिसम्बद्धशरीरावयवाना सुप्रतीतत्वादिति, शेषाणां त्वेकेन्द्रियविकलेन्द्रियसमूर्च्छजपञ्चेन्द्रियाणा त्रिविधाऽपि योनि सभवति, केषाञ्चित्परजीवपरिगृहीतक्षेत्रोत्पन्नाना सचित्ता केषाञ्चिदन्यजीवापरिगृहीतक्षेत्रोत्पन्ना-

नामचित्ता केषाञ्चित्पुनरन्यजन्तुपरिगृहीतापरिगृहीतस्थानगभूताना मिश्रा योनिरिति भाव इति गाथार्थ ॥ ४६ ॥ अपरञ्च—

**सीओसिणजोणीया सव्वे देवा य गब्भवक्कता । उसिणा य तेउकाए दुह नरए तिविह सेसाण ॥ ४७ ॥**

सर्वेऽपि भवनवास्यादयो देवा, शीतोष्णयोनिका तदुपपातक्षेत्रस्य शीतोष्णस्पर्शपरिणतत्वादिति नैकान्तेन शीत नाप्युष्ण किन्त्वनुष्णाशीतं तदुपपातक्षेत्रमिति भाव, एव गर्भव्युत्क्रान्तय पञ्चेन्द्रियतिर्यग्मनुष्या अपि सर्वे शीतोष्णयोनयो भावनीया, तेजस्काये तेजस्कायिकजीवानामित्यर्थ, उष्णैव योनि, उष्णस्पर्शपरिणत एव क्षेत्रे तेषामुत्पत्ते, नरके तु नारकाणा द्विधा योनि केषाञ्चित् शीता केषाञ्चिदुष्णेति भाव:, अयमभिप्राय —आद्यासु तिसृषु पृथिवीषु तावन्नारका एकान्तेनोष्णवेदनामेवानुभवन्ति, इहत्यखादिराङ्गारेभ्योऽप्येतासु अनन्तगुणोष्णसद्भावादिति भाव, चतुर्थपृथिव्यामपि बहवो नारका उष्णामेव वेदना सवेदयन्ते, बहुषु प्रस्तटेष्वस्यामपि यथोक्तोष्णस्यसम्भवादिति हृदय, स्वल्पास्तु केचिन्नारका एतस्या शीतवेदनामपि विषहन्ति, केषुचित्प्रस्तटेष्वत्यहिमादप्यनन्तगुणशैत्यस्य सद्भावादिति, पञ्चमपृथिव्यामप्येवमेव वाच्य, नवर शीतान्वितस्थानबाहुल्यसम्भवाच्छीतवेदनावेदयितारो नारका बहव, उष्णवेदनावेदकास्तु स्वल्पा, औष्ण्ययुक्तस्थानानामल्पत्वादिति व्यत्ययतो वक्तव्य, षष्ठीसप्तमपृथ्वीनारकास्त्वेकान्तेन शीतवेदनामेव सहन्ते, यथोक्तशैत्यादपि तीव्रतरशैत्यस्य तत्र पृथ्वीद्वये सद्भावादिति, एव च व्यवस्थिते ये केचिन्नारका उष्णवेदनावेदकत्वेनेह निर्दिष्टा ते सर्वेऽपि शीतयोनिका, ये तु शीतवेदनावेदकत्वेनोक्तास्ते सर्वेऽप्युष्णयोनिका, यदि हि शीतवेदकाना शीतैव योनि स्यादुष्णवेदकानामुष्णैव तदा सजातीयत्वाद्वेदनाबाहुल्य न स्यात, नारकाणां तु प्राय सर्व तथैव परिणमति यथा वेदना प्राचुर्यमापद्यत इति योनिवेदनयोर्व्यत्यय, तस्मादाद्यपृथ्वीत्रये चतुर्थपृथिव्यामपि च बहुषु स्थानेषु पञ्चमपृथिव्या तु स्वल्पेषु स्थानेषु शीतयोनिका एव, चतुर्थपृथिव्या स्वल्पेषु स्थानेषु पञ्चमपृथिव्या बहुषु स्थाने षष्ठीसप्तमपृथ्वीद्वये च नारका उष्णयोनिका एवेति स्थितमिखल विस्तरेण, तदर्थिना तु प्रज्ञापनेवान्वेषणीया। **मूलवृत्तिकृता** त्वाऽऽद्यासु तिसृषु पृथ्वीषु नारकाणा तु योनिरुष्णैव, चतुर्थ्या तु केषुचित्प्रस्तटेष्वाद्येषूष्णैव शेषेषु शीता, तिसृषु चाधस्तनीषु पृथ्वीषु शीतैवेति व्याख्यात, एतच्च प्रज्ञापनाऽभिप्रायतो बहुविसवादि लक्ष्यते, तत्त्व तु बहुश्रुता एव विदन्तीति, **'तिविह सेसाण'** ति उक्तशेषाणा

शीतादिभेदा योनि गा. ४७

पृथिव्यम्बुवायुवनस्पतिविकलेन्द्रियसंमूर्छजपञ्चेन्द्रियाणा त्रिविधाऽपि योनि संभवति, शीतस्पर्शपरिणतदेशोत्पन्नाना शीता उष्णस्पर्शप्रदेशजातानां तूष्णा शीतोष्णस्पर्शान्वितस्थानसम्भूताता पुन शीतोष्णा योनिरिति भाव इति गाथार्थ ॥ ४७॥ यथोक्तयोनिसमुत्पन्नाश्च जीवा यथासम्भवं षट्सु संहननेषु वर्तन्तेऽत संहननस्वरूपनिरूपणा निवाह—

वज्जरिसह नारायं वज्जं नारायं च नारायं। अद्धं चिय नारायं कीलिय छेवट्ठ संघयणं ॥ ४८ ॥

संहति संहनन-अस्थ्ना परस्पर सम्बन्धापादनमिति भाव, तच्चास्थिसम्बन्धस्यैव वैचित्र्यमाश्रित्य षोढा भिद्यते, तत्र वज्रशब्देनेह कीलिका प्रोच्यते, ऋषभस्तु संहतास्थिद्वयस्योपरि वलयाकार परिवेष्टनपट्ट, विवक्षितास्थ्नोरेकाधरोत्तरेण मर्कटबन्धयोरुभयतो मर्कटबन्धो नाराच, ततश्चेदमुक्त भवति द्वयोरस्थ्नोरुभयतो मर्कटबन्धेन बद्धयो पट्टाकृतिना तृतीयेनास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदि कीलिकाकार वज्रनामकमस्थि यत्र भवति तद्वज्रर्षभनाराच प्रथमसंहनन, वज्रर्षभाभ्यामुपलक्षितो-निगदितो नाराचोऽस्मिन्निति कृत्वा १ 'वज्जं नारायं चे' ति यत्र तु ऋषभो नास्ति शेष तु विद्यते तद्वज्रनाराचं द्वितीयमिति, वज्ररहितमृषभनाराचं द्वितीयमित्यन्ये २ वज्रर्षभवर्ज नाराचं तृतीय ३ 'अद्धं चिय नारायं' ति चतुर्थ चार्द्धनाराचं द्वितीयमित्यन्ये, यदेकतो मर्कटबन्ध द्वितीयपार्श्वे तु कीलिकाविद्धं तदर्द्धनाराचमिति हृदयम् ४ ऋषभनाराचवर्ज कीलिकाविद्धास्थिद्वयसञ्चयमात्रं तु कीलिकाख्यं पञ्चम ५ 'छेवट्ठ' ति दकारस्यानुस्वारस्य च लुप्तस्येह दर्शनाच्छेदे -पर्यन्ते सेवाऽऽपूना वृत्तं परस्परसम्बन्धलक्षणा वर्तनं प्रवर्तित तच्छेदवृत्त, कीलिकामर्कटबन्धरहितमस्थिपर्यन्तमात्रस्पर्शि छेदवृत्ताभिधानं षष्ठं संहननमित्यर्थ, सेवार्तमिदमित्यन्ये, अस्थिद्वयपर्यन्तसंस्पर्शलक्षणा सेवामृतागतमिति सेवार्तमिति कृत्वेति गाथार्थ ॥ ४८ ॥ ऋषभवज्रनाराचशब्दान् स्वयमेव व्याचिख्यासुराह—

रिसहो य होइ पट्टो वज्जं पुण कीलिया वियाणाहि। उभओ मक्कडबंध नारायं तं वियाणाहि ॥ ४९ ॥

गतार्थैव ॥ ४९ ॥ एतानि च संहननानि येषा जीवाना यावन्ति भवन्ति येषा च सर्वथा न भवन्ति तदेतद्दर्शयन्नाह—

**नरतिरियाण छप्पिय हवइ हु विगलिंदियाण छेवट्ठं । सुरनेरइया एगिंदिया य सव्वे असंघयणी ॥ ५० ॥**

इह विकलेन्द्रियैकेन्द्रियाणा पृथगेवोपादानात्पारिशेष्यादेव तिर्यक्शब्द पञ्चेन्द्रियतिर्यक्ष्वेव वर्तते, ततश्च नराणा पञ्चेन्द्रियतिरश्चा च कस्यचित्किञ्चिदिति सामान्येन षडपि संहननानि यथोक्तस्वरूपाणि प्राप्यन्ते, विकलेन्द्रियाणा त्वेकमेव छेदवृत्त लभ्यते, न शेषाणि, सुरनारका एकेन्द्रियाश्च सर्वे 'असहननिन' सहननरहिता, सहननस्यास्थिरचनारूपत्वादेतेषा चास्थ्नामभावादिति भाव इति गाथार्थ ॥ ५० ॥ एतानि च सहननानि सामान्यत सस्थानाव्यभिचारीण्येव, संस्थानाभावे सहननस्य सर्वथैवाभावादत सस्थानप्रतिपादनार्थमाह—

**समचउरंसा नग्गोह साइ खुज्जा य वामणा हुंडा । पंचिंदियतिरियनरा सुरा समा सेसया हुंडा ॥ ५१ ॥**

शरीराकृतिरवयवरचनात्मिका सस्थानमुच्यते, तदपि समचतुरस्रादिभेदात्षोढा, तत समा -शरीरविषयलक्षणप्रमाणाविसवादिन्यश्चतुर्दिग्विभागोपलक्षिता शरीरावयवरूपाश्चतस्रोऽश्रयो यत समासान्तविधिना ऽत्प्रत्ययात्समचतुरस्र -सामुद्रिकशास्त्रादिप्रतिपादितसमग्रलक्षणपरिपूर्ण प्रथम सस्थान तद्योगाज्जीवा अपि समचतुरस्रा, 'नग्गोह' त्ति इहैकदेशेन समुदायस्य गम्यमानत्वान्न्यग्रोधपरिमण्डला इति द्रष्टव्य, तत्र न्यग्रोधो-वृक्षविशेषस्तद्वत्परिमण्डल न्यग्रोधपरिमण्डल, यथा न्यग्रोध उपरि रमणीय -सम्पूर्णावयवोऽधस्तने तु न तथा तद्वन्नाभेरुपरि विस्तरबहुल-शरीरलक्षणयुक्तमधस्तु हीनाधिकप्रमाणान्वित यत्संस्थान तन्न्यग्रोधपरिमण्डल तद्योगाज्जीवा अपि न्यग्रोधपरिमण्डला २ 'सादि'-त्ति आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते तेनादिना-शरीरलक्षणभाजा सह वर्तते यत्तत्सादि, सर्वमेव हि शरीरमविशिष्टेनादिना सह वर्तत एवेति विशेषणान्यथाऽनुपपत्तेरादेरिह विशिष्टता लभ्यते, सादिसस्थानयोगाज्जीवा अपि सादय ३ 'खुज्जा य' त्ति कुब्जाश्चेत्यर्थ, यत्र पाणिपादशिरोग्रीव शरीरलक्षणप्रमाणयुक्त कोष्ठं तु शेषकायलक्षणं हीनाधिकप्रमाणं तत्कुब्जसंस्थानं तद्योगाज्जीवा अपि कुब्जा ४ यत्र पाणिपादशिरोग्रीव लक्षणविसंवादि शेषस्तु पृष्ठोदरादिरूप कोष्ठो लक्षणयुक्तस्तद्वामन संस्थानं तद्योगाज्जीवा अपि वामना ५ यत्र पुन प्रायेणैकोऽप्यवयव शरीरलक्षणं न सवदति तत्सर्वत्रासस्थितं हुण्डकसस्थानमुच्यते तद्योगाज्जीवा अपि हुण्डा ६ । क पुनस्ते

पृथिव्यादिसंस्थानानि शरीराणि च गा. ५२-३.

ये यथोक्तषट्संस्थानयुक्ता ? इत्याह—'**पंचिंदियतिरियनर**'त्ति नानाजीवानाश्रित्य पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च यथोक्तसंस्थानयुक्ता प्रतिपत्तव्याः, '**सुरा सम**'त्ति देवाः सर्वेऽपि समचतुरस्रसंस्थानयुक्ता इत्यर्थः, शेषास्तूक्तावशिष्टा जीवा नारकैकेन्द्रियविकलेन्द्रियलक्षणाः सर्वे हुण्डसंस्थानयुक्ता एवेति,-लाघवार्थं युगपदेव संस्थानानि तत्स्वामिनश्च निर्दिष्टा इति गाथार्थः ॥ ५१ ॥ यदवेकेन्द्रियाणां हुण्डसंस्थानं तत्पृथिव्यादीनां मसूराद्याकारभेदतो भिन्नं द्रष्टव्यमिति दर्शयति—

**मरसूरए य थिवुगे सूइ पडागा अणेगसंठाणा । पुढविदगअगणिमारुयवणस्सईणं च संठाणा ॥ ५२ ॥**

मसूरो-मालवकादिप्रसिद्धो मसूरकाकारो धान्यविशेषस्तदाकारं शरीरसंस्थानं '**पुढवि**'त्ति पृथ्वीकायिकानां द्रष्टव्यं, स्तिबुको-बिन्दुस्तदाकारं '**दग**' त्ति उदककायिकानां, सूच्याकारमग्निकायिकानां, पताकाकारं वायुकायिकानां, '**वणस्सईणं च संठाण**' त्ति, च पूर्वोक्तापेक्षया समुच्चये, वनस्पतीनां च शरीरस्य संस्थानान्यवयवरचनात्मिकानि अनेकाकाराणि भवन्तीत्यर्थः, इति गाथार्थः ॥ ५२ ॥ ग्रन्थाग्रम् १००० ॥ कायद्वारमिदं प्रस्तुतं, कायशब्दश्च यथा पृथिव्यादिजीवनिचयरूपे काये एवमौदारिकादिरूपे शरीरेऽपि वर्त्ततेऽत इह कायशब्दवाच्यत्वमाश्रित्य कायद्वारेऽस्मिन् प्रस्तुते शरीराण्यप्यौदारिकादीनि विचारयितुमाह—

**ओरालिय वेउव्विय आहारय तेयए य कम्मयए । पंच मणुएसु चउरो वाऊ पचिंदियतिरिक्खे ॥ ५३ ॥**

उदारं -तीर्थकरशरीरापेक्षया समस्तत्रिभुवनप्रधानं पुद्गलैर्निर्वृत्तमौदारिकं, अथवोदारा -स्फारतामात्रसारा वैक्रियादिशरीरपुद्गलापेक्षया स्थूला इत्यर्थः, तैरित्थम्भूतैः पुद्गलैर्निष्पन्नमौदारिकं अथवोदारं शेषसहजसमस्तशरीरापेक्षया बृहत्प्रमाणं उदारमेवौदारिकं वैक्रियं तूत्तरवैक्रियावस्थायामेव लक्षयोजनप्रमाणं प्राप्यते सहजं तु तदप्युत्कृष्टतः पञ्चधनुःशतमानमेव औदारिकं तु सहजमपि स्वयम्भूरमणमत्स्यापेक्षया योजनसहस्रमानं पद्मनालापेक्षया वा सातिरेकं योजनसहस्रमानं लभ्यत इति शेषसहजशरीरेभ्यो बृहत्प्रमाणताऽस्य भावनीया १ विविधा नानाप्रकारा क्रिया विक्रिया तस्यां भवं वैक्रियं, तथा च तद्धेतुभूतायाः क्रियायाः वैक्रियसमुद्घातकरणदण्डनिसर्गादिविधिवक्तव्यं प्रज्ञप्त्यादिषु निर्दिष्टं, तद्यथा-"ताहे चेव णं से वेउव्विय काउकामे वेउव्वियसमुग्घाएणं समोहणइ २ संखेज्जाइं जोयणाइं दंडं निसिरइ २ अहाबायरे पोग्गले परिसाडेइ २ दोच्चं पि वेउ-

॥ ३६ ॥

व्वियसमुग्घाएण समोहणई' त्यादि, एवम्भूतया विक्रियया निष्पद्यमानत्वाद्वैक्रियमिदमुच्यते अस्वाभाविकमितियावत्, नन्वनया व्युत्पत्योत्तरवैक्रियसङ्ग्रह एव स्यान्न सहजवैक्रियस्य, तस्य समुद्घातादिक्रियामन्तरेणैव जायमानत्वात्, सत्यं, किन्तूत्तरवैक्रियसमानजातीयपुद्गलैर्निष्पद्यमानत्वाद्वैक्रियमिव वैक्रियमित्युपचारतस्तदपि वैक्रियमुच्यते, अथवौदारिकाद्यपेक्षया विशिष्टा-विलक्षणा क्रिया विक्रिया तस्यां भवं वैक्रियमित्येव तदपि सगृह्यते, "पाणिदयरिद्धिसंदरिसणत्थमत्थोवगहणहेउं वा। संसयवोच्छेयत्थं गमण जिणपायमूलमि ॥ १ ॥ इत्येवंभूतकार्योत्पत्तौ चतुर्दशपूर्वविदा आह्रियते गृह्यत इत्याहारकं अथवाऽऽह्रियन्ते सूक्ष्मा जीवादयः पदार्था केवलिसमीपेऽनेनेत्याहारकं ३ आहारपाककारणभूतास्तेजोनिसर्गहेतवश्चोष्णा पुद्गलास्तेज इत्युच्यते तेनेत्थम्भूतेन तेजसा निर्वृत्त तैजसं, औष्मादिलिङ्गगम्यं ४ कर्मणा निर्वृत्तं कार्म्मणमष्टकर्मसमुदायरूपमित्यर्थ ५ तदेवमेतानि पञ्च शरीराणि सामान्येन सर्वजीवाना भवन्ति, विशेषतोऽपि चिन्त्यमानानि **'पंच मणुएसु'** त्ति नानाजीवानाश्रित्य मनुष्येषु पञ्चाप्यमूनि लभ्यन्त इत्यर्थ, वायूना गर्भजपञ्चेन्द्रियतिरश्चा चत्वारि शरीराण्यौदारिकवैक्रियतैजसकार्म्मणलक्षणानि प्राप्यन्ते, आहारकं तु न लभ्यते, तस्य चतुर्दशपूर्वविद एव सम्भवादिति गाथार्थ ॥ ५३ ॥ देवादीना शरीरसङ्ख्यामाह—**'वेउव्वी'**त्यादि,

**वेउव्वियतेए कम्मए य सुरनारया य तिसरीरा। सेसेगिंदियवियला ओरालियतेयकम्मइगा ॥ ५४ ॥**

सुरनारकाः पुनस्त्रीणि शरीराणि येषा ते त्रिशरीरा भवन्ति, कानि पुनस्त्रीणि शरीराणि तेषा भवन्ति ? इत्याह—वैक्रियं तैजसं कार्मणं चेति, औदारिकं त्वमीषा न भवति, तस्य तिर्यग्मनुष्येष्वेव सम्भवात्, आहारकमपि न सभवति, तस्य मनुष्यचतुर्दशपूर्वधरेष्वेव भावादिति, भणितशेषा पुनरेकेन्द्रिया पृथिव्यप्तेजोवनस्पतिलक्षणा तथा सम्पूर्णेन्द्रियमनोवैकल्याद्विकला -द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियस्वरूपा औदारिकतैजसकार्म्मणशरीरवन्त एव भवन्ति, वैक्रियं तु भवप्रत्ययिकं तावदमीषा न भवति, तस्य सुरनारकेष्वेव सम्भवाद्, उत्तरवैक्रियमपि न प्राप्यते एषा तल्लब्ध्यभावात्, आहारकाभावे तु पूर्वोक्तमेव कारण भावनीयमिति गाथार्थ ॥ ५४ ॥
तदेवमभिहित सप्रसङ्ग कायद्वारमथ क्रमप्राप्तं योगद्वारमभिधित्सुराह—

॥ ३७ ॥

**सच्चे मोसे मीसेऽसच्चे मोसे मणे य वाया य। ओरालियवेउव्विय आहारयमिस्सकम्मइए ॥ ५५ ॥**

मनोविषयो वाग्विषयश्च स सत्यो मृषा मिश्रोऽसत्यामृषश्चेति योगः प्रत्येकं चतुर्द्धेत्यक्षरघटना, भावार्थस्तूभिधीयते-तत्र योग इति तावत्क शब्दार्थः १, उच्यते, योजन योगो जीवस्य वीर्यं शक्तिरुत्साहः पराक्रमश्चेष्टा परिस्पन्द इतियावत्, अथवा युज्यते-धावनवल्गनादिक्रियासु व्यापार्यते य स योग इति कर्म्मसाधन, यदिवा युज्यते-सम्बध्यते धावनवल्गनादिक्रियाया जीवोऽनेनेति योग इति करणसाधनः, स च मनोवाक्कायभेदात्त्रिधा, तद्यथा—मनोयोगो वाग्योगः काययोगश्चेति, तत्र सञ्ज्ञिभिर्जीवै काय-योगेन मनःप्रायोग्यवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि द्रव्याणि मन इत्युच्यते, तेन मनसा सहकारिकारणभूतेन योगो मनोयोगो, मनोविषयो वा योगो मनोयोगः १, उच्यते इति वाग्-भाषापरिणामापन्नपुद्गलद्रव्यसमूह इत्यर्थः, तया वाचा सहकारिकारणभूतया योगो वाग्योगो वाग्विषयो वा योगो वाग्योगः २, चीयत इति काय औदारिकादिस्तेन सहकारिकारणभूतेन योगः काययोगः कायविषयो वा योग काययोग ३, एष च त्रिविधोऽपि योगः पुनः पञ्चदशधा भिद्यते, तत्र मनो-योगस्तावच्चतुर्धा, तद्यथा-सन्तो मुनयो जीवादिपदार्था वा तेषा यथास्वरूप मुक्तिप्रापकत्वेन यथावस्थितवस्तुचिन्तनेन वा हित सत्यः, अस्ति जीव शरीरमात्रव्यापक इत्यादि-यथावद्वस्तुविकल्पनपर इत्यर्थ, सत्यश्चासौ मनोयोगश्च सत्यमनोयोगः, आह ननु योग परिस्पन्दक्रियारूप उक्तस्तस्य च कथ सत्यादिव्यपदेश सभवति ?, तथाप्रतीतेरे-वाभावादिति, सत्य, तथाऽपि सत्यमनोविज्ञानसहकारिकारणत्वात् मनोयोगस्यापि सत्यत्वमुच्यते, कारणे कार्यधर्मोपचारादित्येवमन्यत्रापि भावनीयमिति १, सत्यविपरी-तोऽसत्यो, नास्ति जीव सर्वव्यापकोवाऽयमित्याद्ययथावस्थितवस्तुचिन्तनपर इति भाव, असत्यश्चासौ मनोयोगश्चासत्यमनोयोग २, सत्यश्चासावसत्यश्च सत्यासत्य इति कृता-कृतादिवत्कर्मधारय. स चासौ मनोयोग, इह धवखदिरपलाशादिमिश्रेषु बहुष्वशोकवृक्षेष्वशोकवनमेवेदमिति यदा विकल्पयति तदा प्रस्तुतमनोयोगविषयता, अयं हि विकल्पः तत्राशोकवृक्षाणा सद्भावात्सत्योऽन्येषामपि धवादीना कियतामपि विद्यमानत्वादसत्य इति मिश्रत्वात्सत्यासत्यमनोयोगतया प्रोच्यतेऽत एव सूत्रकृता मिश्र इत्युक्तम्, उपल-क्षण चाशोकवनोदाहरण, सर्वस्मिन्नपि नगरे गृहे २ दारका जाता प्रतिगृह विवाहा इत्यादि विकल्पस्यापि प्रस्तुतमनोयोगविषयता द्रष्टव्या, इदमेवाशोकवनादिक वचनेन ब्रुवतो

वक्ष्यमाणसत्यासत्यवाग्योगविषयता मन्तव्या, किं च दृष्टा अस्मिन् प्रदेशे त्वया कतिचिच्चौरा कुरङ्गा वा ? इत्यादिके केनचित्पृष्टे एते पुरतस्तिष्ठन्तीत्येवमादिरूपेण कथयामीत्याद्यपि विकल्पयतः प्रस्तुतमनोयोगो द्रष्टव्यः, अयं हि विकल्पः परिस्थूरव्यवहारनयमतेन सत्यो निश्चयनयमतेन तु परपीडाविहतत्वेन पापानुबन्धित्वादसत्य इति सत्यासत्यमनोयोगता, एतस्मिन्नेव प्रश्ने एते पुरतस्तिष्ठन्तीत्यादि वदतो वक्ष्यमाणसत्यासत्यवाग्योगविषयताऽपि भावनीया, इदं हि वचनं स्थूरव्यवहारतः सत्यं निश्चयतस्त्वसत्यं यत उक्तम्—"अलियं न भासियव्वं अत्थि हु सच्चं पि जं न वत्तव्वं। सच्चं पि तं न सच्चं जं परपीडाकरं वयणं ॥१॥"ति, न विद्यते सत्यं यत्र स भवत्यसत्यो न विद्यते मृषा यत्र स भवत्यमृषः असत्यश्चासावमृषश्चेति पूर्ववत्कर्मधारयः स चासौ मनोयोगश्चेत्यसत्यामृषामनोयोगः, इह विप्रतिपत्तिविचारायां वस्तुप्रतिष्ठासया प्रमाणाबाधितं सर्वज्ञमतानुसारेण यद्विकल्प्यते प्रोच्यते वा यथाऽस्ति जीवः सदसद्रूप इत्यादि तत्किल सत्यं परिभाषितमाराधकत्वात्, यत्तु विप्रतिपत्तिविचारायामेव वस्तुप्रतिष्ठासया प्रमाणबाधितं सर्वज्ञमतोत्तीर्णं किञ्चिद्विकल्प्यते प्रोच्यते वा यथा नास्ति जीव एकान्तनित्यो वेत्यादि तदसत्यमिति परिकीर्तितं विराधकत्वात्, यत्तु प्रमाणबाधिताबाधितत्वं तत्पूर्वोक्तमशोकवनादिकं सत्यासत्यं, विराधकाविराधकत्वादिति, यत्पुनर्विप्रतिपत्तिमन्तरेणैव वस्तुप्रतिष्ठासां विना स्वरूपमात्रप्रतिपादनपरं व्यवहारपतितं किञ्चिद्विकल्प्यते प्रोच्यते वा यथा हे देवदत्त! घटमानय गां देहि मह्यमित्यादि, तदेतत् स्वरूपमात्रप्रतिपादनपरं व्यावहारिकं विकल्पज्ञानं वचनं वा न सत्यं नापि मृषा किन्त्वसत्यामृषमित्यागमे परिभाषितमनाराधकत्वादविराधकत्वाच्चेत्यतो हे देवदत्तेत्यादिविकल्पोऽसत्यामृषमनोयोग इत्युच्यते, हे देवदत्त! इत्यादिवचनं त्वसत्यामृषवाग्योग इति ४। तदेवं मनोयोगश्चतुर्धा व्याख्यातस्तद्व्याख्याने च वाग्योगोऽपि चतुर्विधो व्याख्यात एव द्रष्टव्यः, प्रायो मनोविकल्पितस्यैव वाग्विषयत्वात्तथाऽपि स्थानाशून्यार्थं किञ्चिद्व्याख्यायते—सता हिता सत्या सा चासौ वाक् चेति सत्यवाक् तया सहकारिकारणभूतया योगः सत्यवाग्योगः, अथवा पूर्वोक्तनीत्या वचनगतं सत्यत्वं योगेऽप्युपचर्यते, ततः सत्यश्चासौ वाग्योगश्चेति सत्यवाग्योग इत्यपि मन्तव्यः, शेषमिहोत्तरत्र च सत्यमनोयोगादिवद्वक्तव्यं १ सत्याद्विपरीताऽसत्या सा चासौ वाक् चेत्यसत्यवाक् तया योगोऽसत्यवाग्योगः २, सत्या चासावसत्या च सत्यासत्या सा चासौ वाक् चेति सत्यासत्यवाक् तया योगः सत्यासत्यवाग्योगः ३, न विद्यते सत्यं यत्र सोऽसत्यो न विद्यते मृषा यत्र सोऽमृषः असत्यश्चासावमृषश्चेति असत्यामृषः स चासौ


॥ ३९ ॥

ाग्योगश्चेत्यसत्यामृषावाग्योगः, विपर्ययव्यवस्था सर्वत्र पूर्वोक्तैवेति ४। इह तृतीतचतुर्थौ मनोयोगौ वाग्योगौ च परिस्थूलव्यवहारनयमतेनैव द्रष्टव्यौ, शुद्धनयाना तु मनोज्ञानं वचन वा सम्यगुपयोगपूर्वकं सत्य अज्ञानादिदूषिताशयपूर्वक त्वसत्य, उभयानुभयरूप तु नास्त्येव, सत्यासत्यराशिद्वयेऽन्तर्भावादिति भावनीय। काययोगस्त्वौदारिकवैक्रियाहारकतन्मिश्रकार्म्मणकायभेदात्सप्तधा, तत्रौदारिकवैक्रियाहारककायाननन्तरमेव व्याख्यातानि, 'मिस्स'त्ति अयं मिश्रशब्दस्त्रिष्वपि शरीरेषु प्रत्येकं संबध्यते, ततश्चौदारिकमेव कायस्तेन सहकारिणा योग औदारिककायक्रिया वा योग औदारिककाययोग १, मिश्रशब्दसम्बन्धादौदारिक मिश्र यत्र कार्म्मणेनेति गम्यते स भवत्यौदारिकमिश्र, उत्पत्तिदेशे ह्यनन्तरागतो जीव प्रथमसमये कार्मणेनेवाहारयति तत परमौदारिकस्याप्यारम्भादौदारिकेण कार्म्मणमिश्रेणान्तर्मुहूर्तमाहारयति, उक्तञ्च निर्युक्तिकृता—"जोएण कम्मएणं आहारेई अणंतरं जीवो। तेण परं मीसेणं जाव सरीरस्स निप्फत्ती ॥ १ ॥" औदारिकमिश्रश्चासौ कायश्च तेन योग औदारिकमिश्रकाययोग, मिश्रताया उभयगतत्वेऽपि कार्म्मणमिश्र इति न व्यपदिश्यते, किन्त्वौदारिकस्य तदा पारभ्यमाणत्वेन बहुव्यापारत्वेन च प्रधानत्वात्तेनैव व्यपदेश औदारिकमिश्र इति २, वैक्रियं पूर्वनिर्दिष्टस्वरूप तदेव कायस्तेन योगो वैक्रियकाययोग ३, वैक्रियं कार्म्मणेन मिश्रं यतासौ वैक्रियमिश्र,, अयं च देवनारकाणामपर्याप्तावस्थाया मन्तव्य, अत्रापि कार्म्मणमिश्रतानभिधाने कारण पूर्वोक्तमेव भावनीयं, अपरं च बादरपर्याप्तकवायोर्गर्भजपञ्चेन्द्रियतिर्यग्मनुष्याणा च वैक्रियलब्धिमता वैक्रियं कृत्वा तत् परित्यज्य पुनरौदारिकं स्वीकुर्वतामौदारिकेणापि मिश्र वैक्रियमवाप्यत इत्यमीषामपि वैक्रियमिश्रसद्भावो ज्ञातव्य, अथात्र पक्षे यथा वैक्रियमौदारिकेण मिश्रमितो वैक्रियमिश्रमिति व्यपदिश्यते तथौदारिकमपि वैक्रियेण मिश्रमित्यौदारिकमिश्रमित्यपि कस्मान्नोच्यत ? इति चेत्, तदयुक्तं, यतो हन्त प्रधानेनैव व्यपदेशो भवति, वैक्रियपरित्यागकाले च बहुव्यापारत्वात्तदेव प्रधानमतस्तेनैव व्यपदेश, अत एव हि वाय्वादीना वैक्रियारम्भकाले वैक्रियमिश्रताव्यपदेशो न भवति, औदारिके हि स्थिता अमी वैक्रियमारभन्ते, ततः प्रारम्भकत्वेन बहुव्यापारत्वादौदारिकमेव प्रधानमतस्तेनैव व्यपदेशो भवत्यौदारिकमिश्रमिति, अन्ये तु वैक्रियारम्भकाल एव वाय्वादीना वैक्रियमिश्रता प्रतिपद्यन्ते, प्रारभ्यमाणत्वेन वैक्रियस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति भावस्तदलमतिविस्तरेण, तदर्थिना तु **प्रज्ञापनाटीकै**व निरीक्षणीया, वैक्रियमिश्रश्चासौ कायश्च तेन योगो वैक्रियमिश्रकाययोग ४, आहारक पूर्वाभिहितसद्भाव तदेव कायस्तेन योग आहारककाययोग ५, आहारक मिश्रं यतो-

दारिकेणेति गम्यते स आहारकमिश्र स चासौ कायस्तेन योग आहारकमिश्रकाययोग, यदा सिद्धप्रयोजनश्चतुर्दशपूर्ववर आहारक परित्यज्य पुनरौदारिकोपादानाय प्रवर्त्तते तदौदारिकेण मिश्रमाहारक प्राप्यते, बहुव्यापारत्वेन प्रधानत्वादाहारकेणैव तदा व्यपदेश इति भाव, अन्ये त्वस्यापि प्रारम्भकाल एवाहारकमिश्रता प्रतिपद्यन्ते, प्रारभ्यमाणत्वेनाहारकस्य प्राधान्यविवक्षया तेनैव व्यपदेशमिच्छन्तीति हृदय ६, कार्मण-निरूपिततत्त्व तदेव कायस्तेन योग कार्मणकाययोग, कार्मणमिश्रस्तु यथा न सभवति तथा निवेदितमेव, कार्म्मणकाययोगश्च केवलो विग्रहगतौ केवलिन समुद्घातगतस्य च तृतीयचतुर्थपञ्चमसमयेषु प्राप्यत इति भावनीयम्, इह च तैजसकार्म्मणयोरेकसद्भावे द्वितीय भवत्येव एकस्याभावे द्वितीयमवश्यतया न भवत्येवेत्येव सर्वदैव सहचरितत्वात् कार्म्मणग्रहणेनैव तैजस गृहीतमित्यनया विवक्षया कार्मणकाययोगात्तैजसकाययोग पृथग् नोक्त इति भावनीयमिति गाथार्थ ॥ ५५ ॥ तदेव निर्दिष्टा पञ्चदशयोगा, इह च जीवसमासा गुणस्थानलक्षणा गत्यादिमार्गणस्थानेषु चिन्तनीया इति प्रस्तुत, तदेतन्मनसि सप्रधारयन् गुणस्थानकानि यथोक्तयोगेषु चिन्तयितुमाह—

**सच्चे असच्चमोसे सण्णी उ सजोगिकेवली जाव। सण्णी जा छउमत्थो सेसं संखाइ अंतवउ ॥ ५६ ॥**

सत्योऽसत्यामृषश्च मनोयोगो वाग्योगश्च सञ्ज्ञिमिथ्यादृष्टिगुणस्थानादारभ्य यावत्सयोगिकेवलिगुणस्थान तावत्प्राप्यते, इदमुक्त भवति-एकेन्द्रियाणा तावन्मनोयोगवाग्योगौ सर्वथैव न संभवत, द्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणा तु वाग्योग सभवति, केवलमसावस्यामेव गाथायामसत्यामृषतया वक्ष्यतेऽत इह पारिशेष्यात्सञ्ज्ञिमिथ्यादृष्टिगुणस्थानादारभ्येत्युक्तम्, अयोगिकेवलिनस्तु सर्वथा योगाभाव एवेति सयोगिकेवल्येव पर्यन्ते निर्दिष्ट इति, 'सण्णी जा छउमत्थो' 'सेस'ति भणितशेषम्, असत्यमनोयोगसत्यासत्यमनोयोगासत्यवाग्योगसत्यासत्यवाग्योगचतुष्टय सञ्ज्ञिमिथ्यादृष्टिगुणस्थानादेवारभ्य क्षीणमोहच्छद्मस्थगुणस्थान यावल्लभ्यते, इहाप्येकेन्द्रियद्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणामभणने कारण पूर्वोक्तमेव द्रष्टव्यम्, अपर च प्रस्तुतयोगचतुष्टयं रागद्वेषाज्ञानानाभोगवतामेव संभवति, ते च रागादय सयोगिकेवलिन सर्वथैवोच्छिन्ना इति सयोगिकेवलिन परिहृत्य क्षीणमोहच्छद्मस्थ एव पर्यन्ते निर्दिष्ट, नन्वेवमपि मिथ्यादृष्ट्यादिषु प्रमत्तान्तेष्वेव गुणस्थानकेषु प्रस्तुतयोगचतुष्टयस्य सम्भवो

युज्यते, तेषामेवाविशुद्धत्वात्, ये त्वप्रमत्तादय क्षीणमोहान्तास्तेषामतीव विशुद्धविशुद्धतरविशुद्धतमत्वात्कथमेतत्सम्भवोऽविशुद्धावेवासत्यताया सम्भवात् ? सत्य, किन्त्वमीषा ज्ञानावरणाद्युदयस्तावदद्याप्यस्त्येव, तस्मिंश्च सत्यनाभोगादय संभवन्ति, तेषु चासत्यताऽवश्यम्भाविनी, अत क्षीणमोहेऽपि छद्मस्थेऽनाभोगतोऽसत्यता संभवति, कि पुन शेषे ?, अत प्रस्तुतयोगचतुष्टयसम्भव एतेषु न विरुध्यते, यत उक्तं-"नहि नामानाभोगाच्छद्मस्थस्येह न भवति स्खलितम् । कर्म्मणि ज्ञानावरणे ज्ञानावरणस्वभावे हि॥१॥"सयोगिकेवलिनस्तु न ज्ञानावरणाद्युदयस्तदभावे च नेवानाभोगादिसम्भवस्तदसम्भवे च नास्यासत्यतासद्भावोऽत इहासौ न गृहीत इत्यल विस्तरेण, आह-ननु मिथ्यादृष्टिगुणस्थानके सञ्ज्ञिपञ्चेन्द्रियस्यैवेह योगचिन्ता कृता, अत्र च तद्वर्त्तिना शङ्खादिद्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणामपि वाग्योग सभवति, स चास्या गाथायामद्यापि न चिन्तित इत्याशङ्क्याह—'संखाइ अंतवउ' त्ति शङ्खादिद्वीन्द्रियाणा कर्णशृगाल्यादित्रीन्द्रियाणा भ्रमरादिचतुरिन्द्रियाणा मत्स्याद्यसञ्ज्ञिपञ्चेन्द्रियाणा च मिथ्यादृशामन्त्या वाग्, असत्यामृषलक्षणा वाग् भवतीत्यर्थ, अव्यक्तध्वनिमात्रत्वात् तद्वाग् न सत्यतया वक्तु पार्यते नाप्यसत्यतया, तस्मादसत्यामृषरूपैवेयमिति भाव, अपरस्त्वाह-ननु पूर्वं नरकगत्यादिषु क कियन्ति कानि च गुणस्थानकानि लभ्यंते ? इत्येव गुणस्थानकलक्षणमार्गणाजीवसमासस्थानेषु चिन्तिता, अत्र तु वैपरीत्य, गुणस्थानस्वरूपेषु जीवसमासेष्वेव योगचिन्ताया भवद्भिर्व्याख्यातत्वात्, सत्य, किन्तु येषु यावत्सु गुणस्थानलक्षणजीवसमासेषु ये यावन्तश्च योगा प्राप्यन्ते तेषु तावत्सु योगेष्वपि ते तावन्त गुणस्थानरूपा जीवसमासा अपि लभ्यन्त इति न कश्चिदर्थभेद, केवल सुखतरप्रसिद्धप्रतीत्युपायत्वमाश्रित्य क्वापि कथञ्चिद्वचनोक्ति प्रवर्त्तते इत्येवमर्थाभेदे सत्यन्यत्राप्युक्तिभेदमात्रेण न संमोह कार्य इति । अत्र च यो यस्य जीवस्य योग उक्त स तस्य लब्धित प्रथमसमयादेव द्रष्टव्य, करणतस्तु स्वपर्याप्त्युत्तरकालमिति गाथार्थ ॥ ५६ ॥ तदेव चिन्तिता वाग्मनोयोगयोर्गुणस्थानलक्षणा जीवसमासा, अथ काययोगतश्चिन्तयन्नाह—

**सुरनरया विउव्वी नर तिरि ओरालिया सवेउव्वी । आहारया पमत्ता सव्वेऽपज्जत्तया मीसा ॥ ५७ ॥**

'वेउव्वी'त्ति वैक्रियशरीरवन्तो भवन्तीति तात्पर्य, के ? इत्याह-मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्टयविरतसम्यग्दृष्टिसुरनारका, ननु सूत्रे सुरनारका इति

काययोगे गुणस्थानकानि गा ५७

॥ ४२ ॥

निर्विशेषणमेवोक्तमतो मिथ्यादृष्ट्यादिविशेषण कथमुपादीयते ? चेद, उच्यते, सामर्थ्यात्, अन्यथा हि गुणस्थानलक्षणाना जीवसमासानां काययोगे चिन्तनीयत्वेन प्रकृते केवलसुरनारकग्रहणमप्रस्तुतमेव स्यात्, न च वक्तव्य सूत्रकृतो नायमभिप्राय, तेनापि मिथ्यादृष्ट्यादिविशेषणस्य चेतस्यध्यवसितत्वात्, कथमिदमवसीयते ? इति चेद, उच्यते, उत्तरगाथाया कार्म्मणकाययोगचिन्तावसरे '**मिच्छासासणे**' त्यादिगुणस्थानकोपन्यासात् प्रेक्षापूर्वकारित्वाच्च, अन्यथा ह्यप्रस्तुतभणनेन तत्कारिता हीयेत, तस्मान्मिथ्यादृष्ट्यादिगुणस्थानकेष्वपि सुरादिविशेषणभूतेषु यदि योगचिन्ता क्रियेत तथाऽपि सामर्थ्यात्तद्विशेष्यभूतेषु सुरादिष्वेवासौ कृता भवेद्, विशेष्यमन्तरेण निराश्रयस्य विशेषणस्यासम्भवाद्, अतो मिथ्यादृष्ट्यादिविशेषणानि प्रस्तुतान्यप्यप्रधानत्वाच्चेतसि निधाय विशेष्यत्वेन प्रधानेषु सुरनारकादिष्वेवेह सूत्रकार काययोगचिन्ता चकार, एवं हि सति प्रत्येकमेवैकस्मिन्नपि जीवसमासे सुरनारकाद्याधारभेदतोऽनेकधात्व प्रतिपन्ने काययोगचिन्ताया विधीयमानाया विचारबाहुल्याच्छिष्यव्युत्पत्त्यादिसाध्यसिद्धिर्भवतीत्यल विस्तरेण, सुधिया त्वन्यथाऽप्यागमाविरोधतोऽत्र समाधानं वाच्यमिति । आह-ननु सुरनारकाणा वैक्रियवैक्रियमिश्रकार्मणलक्षणास्त्रय काययोगा सभवन्ति तत्कथमत्रैक एव वैक्रियकाययोगो निर्दिष्ट ?, उच्यते शरीरपर्याप्त्या पर्याप्तावस्थाभाव्येवायमिह प्रोक्त, तदपर्याप्तावस्थासभवी तु वैक्रियमिश्रकाययोगोऽस्यामेव गाथायामुत्तरार्द्धे वक्ष्यते, विग्रहगत्यादिमभवी तु कार्मणकाययोग उत्तरगाथायामित्यदोष, एतच्च परिभाव्य नरादिविचारेऽपि वक्ष्यमाणे नोत्सुकता विधेया । '**नरतिरि ओरालिया सवेउव्वि**' त्ति मिथ्यादृष्टिसास्वादनमिश्राविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायोपशान्तक्षीणमोहसयोगिकेवलिलक्षणा नरा मिथ्यादृष्टिसास्वादनमिश्राविरतदेशविरतस्वरूपास्तिर्यञ्चश्च औदारिककाययोगिनो भवन्ति, तथैव सह वैक्रियेण वर्त्तन्त इति 'सवैक्रियाः' वैक्रियकाययोगवन्तो भवन्ति, इदमुक्तं भवति—नरास्तिर्यञ्चश्च यथोक्तविशेषणविशिष्टा औदारिककाययोगस्था प्राप्यन्त, तथा तेऽपि नरतिर्यञ्चो वैक्रियकाययोगिनो लभ्यन्ते, केवलं नरा इह गर्भजा प्रमत्तान्ता एव च द्रष्टव्या, समूर्छजमनुष्याणा सक्लिष्टत्वेन वैक्रियलब्ध्यभावात्सकलपर्याप्तिभिरपर्याप्तानामेव मरणाच्च, औदारिककायमात्र त्वमीषामपि संभवति, शरीरपर्याप्त्या पर्याप्तानामेव पञ्चत्वगमनादिति, अप्रमतादयोऽपीह न गृह्यन्ते, तेषामतिविशुद्धत्वेन वैक्रियलब्ध्युपजीवनाभावादिति, तिर्यञ्चोऽपीह गर्भजा मन्तव्या, समूर्छजाना वैक्रियलब्ध्यभावादिति । '**आहारया पमत्त त्ति**' मनुष्येषु चतुर्दश-

पूर्वविद प्रमत्तसंयता आहारककाययोगिनोऽपि भवन्ति, आह-नन्वाहारकप्रारम्भकाले एव लब्ध्युपजीवनौत्सुक्यसम्भवतस्तत्कर्तुः प्रमत्तत्व स्थानान्तरे प्रोक्तं, आहारकशरीरस्य निष्पत्तौ पुनरौत्सुक्यनिवृत्तेरप्रमत्तोऽप्यसौ निर्दिष्टस्तत्कथमिह प्रमत्तत्वेनैव प्रोक्त इ, सत्य, किन्तु स्थानान्तरेऽपि येषामेतन्मतमस्ति यदुताहारकस्य प्रारम्भे निष्ठाया च तत्कर्ता प्रमत्त एव भवति लब्ध्युपजीवनत्वादिति तन्मतमिहाश्रितमित्यदोष, वैक्रियस्यापीदमेव मतमाश्रित्याप्रमत्ते निषेधः क्रियते इति भावनीयमिति । **'सव्वे पज्जत्तया मीस'**त्ति सर्वेऽपि-यथानिर्दिष्टविशेषणविशिष्टाः पूर्वाभिहिताः सुरादयोऽपर्याप्ता-अपर्याप्तावस्थावर्तिनो यावदद्यापि शरीरपर्याप्तिर्न समर्थ्यते इति हृदय, तावदमी मिश्रकाययोगवन्तो भवन्ति, तद्यथा-सुरनारकास्तावदपर्याप्तावस्थाया सर्वेऽपि पूर्वोक्तस्वरूपवैक्रियमिश्रकाययोगवन्तः प्राप्यन्ते, केवलं तस्यामवस्थाया मिथ्यादृष्टिसास्वादनाविरतरूपा एवैते द्रष्टव्या, नतु सम्यग्मिथ्यादृष्टय, अपर्याप्तावस्थाया सम्यग्मिथ्यात्वासम्भवात्, तथाहि-तदवस्थाया तत्पारभविकं वा भवेत्तद्भविकं वा ', न तावत्पारभविकं सम्यग्मिथ्यादृष्टेर्मरणस्यैव निषेधात्, 'न सम्ममिच्छो कुणइ काल' मिति वचनात्, नापि तद्भविक, यतो यदि मिथ्यादृष्टि सन् पर्वभवादायातस्तदाऽपर्याप्त एव सम्यग्मिथ्यात्व न गच्छति, तदवस्थस्य तथाविधविशुद्ध्यभावात्, अथ सास्वादन सन् पर्वभवादायातस्तदा पतनलिका(त): कर्दमान्य मिथ्यात्वमेव गच्छति, न सम्यग्मिथ्यात्वम्, अथ सम्यग्मिथ्यादृष्टि सस्ततोत्पन्नस्तस्य स्थानन्तर्येण सम्यग्मिथ्यात्वे गमनमेव नास्ति, अन्यत्र निषिद्धत्वाद, यत उक्त—'मिच्छत्ता संकंती अविरुद्धा होइ सम्मपुंजेसु । मिच्छाओ ना होसु सम्म मिच्छ न उण मीसं ॥ १ ॥" इति, तस्मान्नापर्याप्तावस्थायाममी सम्यग्मिथ्यादृष्टय, तत सम्यग्मिथ्यादृष्टिसुरनारकाणा न वैक्रियमिश्रसम्भव इति स्थित. नरतिर्यञ्चस्त्वपर्याप्ता पूर्वोक्तस्वरूपौदारिकमिश्रकाययोगिनो प्राप्यन्ते, केवलमेतेऽपि तस्यामवस्थाया मिथ्यादृष्टिसास्वादनाविरता एव मन्तव्याः, यतः सम्यग्मिथ्यादृष्टित्वाभावे निर्विशेषाऽनन्तरोक्तैव युक्तिरिहाप्यवतरति, देशविरतादीन्यपि गुणस्थानकान्यपर्याप्तावस्थाया न संभवन्ति, विरतिसद्भाव एव तद्भावात्, अपर्याप्तस्य च विरतेरसंभवादिति । आह-ननु **'सव्वे अपज्जत्तया मीसा'** इति सूत्रकृता प्रोक्त, एतच्चायुक्तमिव लक्ष्यते, पर्याप्तस्यापि मनुष्यस्य सयोगिकेवलिन. समुद्घातावस्थाया द्वितीयषष्ठसप्तमसमयेष्वौदारिकमिश्रस्य सम्भवात, तथा नराणा तिरश्चा च पर्याप्ताना लब्धिमता वैक्रियस्य आरम्भकाले पूर्वोक्तस्वरूपस्य वैक्रियमिश्रस्य सम्भवात्, तथा पर्याप्तमनुष्याणामेव चतुर्दशपूर्व-

विदा आहारकारम्भादिकाले आहारकमिश्रस्य सुप्रसिद्धत्वाच्चेति, न चैतेऽप्यपर्याप्ता, सर्वस्यापि जन्तो प्रथमोत्पन्नस्यान्तर्मुहूर्तकालमेव अपर्याप्तत्वेन समये परिभावितत्वात्, तत्र च केवलित्वादिभावाना असम्भवादिति, सत्य सूक्तमुक्तं, किन्तु अभिप्रायापरिज्ञानात्, न ह्यत्र अपर्याप्त समयपरिभावित एव सूत्रकृत विवक्षित किन्तु अपरिपूर्णशरीरोऽपि अपर्याप्त इति अभिविवक्षितं, अपर्याप्त इतिकृत्वा, अपरिपूर्ण नरतिरश्चा वैक्रिय चतुर्दशपूर्वविदा आहारक च तदारम्भादिके काले, केवलिनामपि समुद्घातद्वितीयादिसमयेषु औदारिकं असम्पूर्णमेव, सम्पूर्णव्यापाराभावात्, तथा उक्तनीत्या एषामपि अपर्याप्तत्वात् एतत् सम्भवीत्यपि मिश्राणि अत्र सङ्गृहीतानि इत्यदोष, गुणस्थानकानि त्वेतेषु यानि सम्भवन्ति तानि स्वयमभ्यूह्य वाच्यानि, केवल सम्यग्मिथ्यादृष्टीना नरतिरश्चामपि वैक्रियमिश्र न द्रष्टव्य, स्थानान्तरेऽनुक्तत्वात्, ते च किं वैक्रियमेव न कुर्वन्ति अन्यद्वा किञ्चित्कारणमिति केवलिनो बहुश्रुता वा विदन्तीत्यल विस्तरेणेति गाथार्थः ॥५७॥ अथ कार्मणकाययोगे प्रस्तुतजीवसमासाश्चिन्त्यन्ते—

**मिच्छा सासण अविरय भवंतरे केवली समुहया य। कम्मयओ काओगो न सम्ममिच्छो कुणइ कालं ॥ ५८ ॥**

मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्टयो भवान्तरे विग्रहगतौ वर्त्तमाना 'कम्मइओ काओगो'ति 'सुपा सुपो भवन्तीति' विभक्तिव्यत्ययात्कार्म्मणकाययोगे वर्त्तन्त इति सटङ्कः, प्राक्तनस्यौदारिकादेः प्रागेव परित्यागादग्रेतनस्य च तस्याद्याप्यप्राप्ते कार्म्मणकाययोग एव तदानीं ते प्राप्यन्त इति भावः, केवलिनश्च समवहताः-कृतसमुद्घातास्तृतीयचतुर्थपञ्चमसमयेषु कार्म्मणकाययोग एव लभ्यते, इदमुक्त भवति-इह कोऽपि केवली मुक्तिगमनासन्नावस्थाया स्वकीयमायु स्तोकं वेदनीय त्वद्यापि प्रचुर ज्ञात्वाऽऽयु स्थित्यधिकवेदनीयस्थितिक्षपणार्थं स्वजीवप्रदेशै समस्तलोकव्यापनाय दण्डकपाटादिक्रमेण समुद्घात करोति, तदुक्तम्-"यस्य पुन केवलिन कर्म भवत्यायुषोऽतिरिक्ततरम्। स समुद्घात भगवानथ गच्छति तत्समीकर्तुम् ॥१॥" कथम्? "दण्ड प्रथमे समये कपाटमथ चोत्तरे तथा समये। मन्थानमथ तृतीये लोकव्यापी चतुर्थे तु ॥२॥ संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुन षष्ठे। सप्तमके तु कपाटं संहरति ततोऽष्टमे दण्डम् ॥ ३ ॥" एते चाष्टाना समयाना मध्ये कस्मिन् समये क योगे वर्त्तन्ते ? इति, उच्यते "औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्ट। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥ १ ॥ कार्म्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च।

समयत्रयेऽपि तस्मिन् भवत्यनाहारको नियमा ॥ २ ॥” दिति, तदेवं केवलिन समवहता यथोक्तेषु तिषु समयेषु कार्मणकाययोगे प्राप्यन्ते, शेषास्तु देशविरतादयो जीवसमासाः कार्म्मणकाययोगे न प्राप्यन्ते, सयोगिकेवलिनं विहायान्यस्य विग्रहगतावेव केवलकार्मणकाययोगसद्भावात्, तस्या च देशविरतत्वादिगुणानामसद्भावात्,सम्यग्मिथ्यादृष्टिरपि विग्रहगतौ न सभवति,मृतस्यैव भवान्तरगमनमप्राप्नुवतो विग्रहगतिभाव, तस्य चागमे मरणनिषेधात्, एतदेवाह—‘ **न सम्मभिच्छो कुणइ काल**’मिति, सम्यग्मिथ्यादृष्टित्वे वर्तमानो जन्तु काल न करोत्येव, तत्स्वाभाव्यादिति, अथ ‘सच्चे असच्चमोसे सण्णी उ सजोगिकेवली जावे’ त्यादिगाथाद्वयोक्तस्यैवार्थस्य तात्पर्यमुच्यते, तद्यथा-मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्टिलक्षणास्त्रयो जीवसमासास्तावच्चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्रकार्म्मणकाययोगलक्षणेषु त्रयोदशसु योगेषु वर्तन्ते, सम्यग्मिथ्यादृष्टिस्तु चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकशरीरवैक्रियशरीरलक्षणेषु दशसु योगेषु वर्तन्ते, देशविरतस्तु दशस्वेतेष्वेव तथैकादशे वैक्रियमिश्रकाययोगे वर्तते, प्रमत्तसयतस्त्वेतेष्वेवाहारकद्विकसहितेषु त्रयोदशसु योगेषु प्राप्यते, अप्रमत्ताद्य क्षीणमोहान्ता पुन षड् जीवसमासाश्चतुर्विधमनोयोगचतुर्विधवाग्योगौदारिकशरीरलक्षणेषु नवसु योगेषु लभ्यन्ते, सयोगिकेवली तु सत्यमनोयोगासत्यामृषमनोयोगसत्यवाग्योगासत्यामृषवाग्योगौदारिकौदारिकमिश्रकार्मणकाययोगलक्षणेषु सप्तसु योगेषु वर्त्तन्ते इत्येतत्पूर्वोक्तग्रन्थेनेह प्रतिपादित, तथा च सति—“ चउरो जीवसमासा तेरसजोगेसु दससु एक्को य। एक्कारससु य एक्का सत्तसु एक्को नवसु छक्क ॥ १ ॥ ” अयोगिकेवलिगुणस्थान तु योगेषु न वर्त्तत एवायोगत्वादेवेत्येतदिह समर्थित भवतीति गाथार्थ ॥ ५८ ॥ उक्त योगद्वारमथ वेदद्वारमभिधित्सुराह—

**नेरइया य नपुंसा तिरिक्खमणुया तिवेयया हुंति। देवा य इत्थिपुरिसा गेविज्जाई पुरिसवेया ॥ ५९ ॥**

वेद्यते स्त्र्यादिकामाभिलाषजनकत्वेनानुभूयत इति वेद -चरित्रमोहनीयान्तर्गत कर्मपुद्गलसमूहविशेष , अय च त्रिधा, तद्यथा-स्त्रिया- पुरुष प्रति कामाभिलाषजनको वेद स्त्रीवेद , पुरुषस्य स्त्रिय प्रति कामाभिलाषजनको वेद पुरुषवेद , नपुसकस्योभयं प्रति कामाभिलाषजनको वेदो नपुसकवेद , एष त्रिविधोऽपि वेद आधारमन्तरेण निराश्रयो न सभवत्यतो नारकाद्याश्रयद्वारेणैव निरूप्यते नारकास्तावन्नपुसका , नारकेषु नपुसकवेद एव प्राप्यते, तेषामतिसङ्क्लिष्टत्वेन शेषवेदद्वयाभावादिति भाव, तिर्यग्मनुष्यास्त्रिवेदका

भवन्ति, तत्रैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसमूर्छजपञ्चेन्द्रियतिर्यक्षु समूर्छजमनुष्येषु च नपुंसकवेद एव प्राप्यते, गर्भजतिर्यग्मनुष्येषु पुनस्त्रयोऽपि वेदा लभ्यन्ते, भवनपति-व्यन्तरज्योतिष्का सौधर्मेशानसम्बन्धिनश्च देवा उपपातमाश्रित्य स्त्रीवेदपुरुषवेदभाजो भवन्ति, देवाना देवीना चैतेषूत्पादात, सनत्कुमारादयस्तूपपाते पुरुषवेदका एव भवन्ति, देवीना तेष्वनुत्पादात्, सौधर्मेशानोत्पन्नास्तु देव्योऽच्युतकल्पान्तदेवाना परिभोगमायान्ति, अत सभोगमाश्रित्य द्वादशकल्प यावत् स्त्रीवेदपुरुषवेदद्वयमपि प्राप्यते, ग्रैवेयकानुत्तर-वर्तिन सुरा पुन सर्वेऽपि पुरुषवेदका, स्त्रीसम्भोगस्यापि तेष्वभावादिति गाथार्थ ॥५९॥ उक्त स्वल्पत स्वाश्रययुक्तोऽपि वेद, साम्प्रत तत्रैव गुणस्थानलक्षणा जीवसमासाश्चिन्त्यत इत्याह—

अनियट्टन्त नपुंसा सन्नीपंचिंदिया य थीपुरिसा । कोहो माणो माया नियट्टि लोभो सरागतो ॥ ६० ॥

'अनियट्टी'त्यादि, मिथ्यादृष्ट्यादीनि अनिवृत्तिरन्ते येषा तान्यनिवृत्त्यन्तानि नव गुणस्थानकानि 'नपुंस'त्ति एकेन्द्रियादीन् जीवानाश्रित्य नपुंसकवेदे लभ्यन्ते, कि तस्मिन्नेव?, नेत्याह-'सन्नीपंचिंदिये'त्यादि, ये तु मिथ्यादृष्ट्याद्यनिवृत्त्यन्ता सञ्ज्ञिनो गर्भजा पञ्चेन्द्रिया जीवा ते 'थीपुरिस'त्ति स्त्रीवेदे पुरुषवेदे च वर्तन्त इत्यर्थ, इदमुक्त भवति-अनिवृत्त्यन्तानि नव गुणस्थानकानि नानाजीवान् प्रतीत्य वेदत्रयेऽपि लभ्यन्ते, सूक्ष्मसम्परायादीनि त्वपगतवेदोदयान्येव मन्तव्यानीति एव उक्त वेदद्वार, साम्प्रत कषायद्वारमुच्यते, तत्र 'कषशिषे'त्यादि हिंसार्थो दण्डकधातु, ततश्च कष्यन्ते नरकादिस्थानेषु प्राणिनोऽनेनेति कष-कर्म, अथवा कषन्ति प्राणिन परस्परमस्मिन्निति कष-ससारस्तदेव स एव वा आयो-लाभो येषा ते कषाया-क्रोधमानमायालोभलक्षणा सुप्रतीता एव, अत एव सूत्रकारस्तान् निरूप्य प्रथममेव तेषु प्रस्तुतजीवसमासानेव चिन्तयन्नाह—'कोहो माणो माया'ऽनियट्टि लोभो सरागंतो'त्ति गाथोत्तरार्द्ध, मिथ्यादृष्ट्यादयोऽनिवृत्तिबादरान्ता नवैव जीवसमासा क्रोधमानमायालक्षणेषु त्रिषु कषायेषु वर्तन्ते, लोभकषायेषु पुनर्नव तावदेत एव प्राप्यन्ते, दशमस्तु सूक्ष्मसम्परायो, यत आह-'लोभो सरागंतो' त्ति सह रागेण-सूक्ष्मकिट्टीकृतलोभलक्षणेन वर्तत इति सराग सूक्ष्मसम्परायस्तत्र सूक्ष्मसम्पराये भावस्तदुत्तराभावलक्षणोऽन्तो-व्यवच्छेदो यस्यासौ सरागान्तो लोभ, इदमत्र हृदय-क्रोधमानमायालक्षणकषायत्रयस्योदयोऽ-

निवृत्तिवादर एव व्यवच्छिद्यते, परतस्तु तदुदयाभाव एवेत्येतस्मिन् कषायलये यथोक्ता एव नव जीवसमासा प्राप्यन्ते, लोभकषायोदयस्तु सूक्ष्मसम्परायेऽपि भवत्यतस्तत्र सूक्ष्मसम्परायान्ता दश जीवसमासा लभ्यन्त इति गाथार्थ ॥ ६० ॥ उक्तं कषायद्वारमथ ज्ञानद्वारं विभणिषुराह—

ज्ञाने मतौ च भेदा- गा., ६१-२

**आभिणिसुओहिमणकेवलं च नाणं तु होइ पंचविहं । उग्गह ईह अवाया धरणाऽऽभिणिबोहियं चउहा ॥ ६१ ॥**

ज्ञायते-परिच्छिद्यते वस्त्वनेनेति ज्ञानं-ज्ञातिर्वा ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थ, तत् पुनर्ज्ञानमिह भीमो भीमसेन इत्यादिन्यायादेकदेशेन समुदायस्य गम्यमानत्वादाभिनिबोधिकश्रुतावधिमन पर्यायकेवलभेदात्पञ्चविध, तत्राभीत्याभिमुख्ये नीति नैयत्ये, ततश्चाभिमुखो वस्तुनो योग्यदेशावस्थानापेक्षी नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधोऽभिनिबोध स एव स्वार्थिकतद्धितोत्पादादाभिनिबोधिक, अथवाऽभिनिबुध्यते-परिच्छिनत्ति वस्त्वित्यभिनिबोध इति कर्त्तरि, यदिवाऽभिनिबुध्यते-संवेद्यते आत्मना स इत्यभिनिबोध इति कर्मणि स एवाभिनिबोधिकमिति तथैव, तथा श्रवणं श्रुत-अभिलापप्लावितार्थग्रहणप्रत्यय उपलब्धिविशेष, अथवा श्रूयतेऽसाविति श्रुत-शब्द,, स च कारणे कार्योपचारेण ज्ञानशब्दवाच्यो भवत्यत सोऽपि श्रुतमुच्यते, तथाऽवधानमवधि -इन्द्रियाद्यनपेक्षमात्मन साक्षादर्थग्रहणम्, अथवाऽवधि -मर्यादा तेनावधिना-रूपिद्रव्यमर्यादात्मकेन यज्ज्ञान प्रवर्तते तदप्यवधिरुपचारादिति, तथा सञ्ज्ञिभिर्जीवै काययोगेनेत्यादिना पूर्वोक्तस्वरूप मन पर्येयति-अवगच्छतीति कर्मण्यणि कृते मन पर्यायमिति, तथा केवल एकमसहायमसाधारणमनन्तमपरिशेष चोच्यते, तत्रैक तद्भावे शेषच्छाद्मस्थिकज्ञानदर्शनाभावात् असहायं त्विन्द्रियमन कृतसाहाय्यनिरपेक्षत्वेनार्थपरिच्छेदात् असाधारणं स्वनन्यसदृशत्वात् अनन्त त्वपर्यवसितकालावस्थायित्वात् अपरिशेष तु सम्पूर्णमुच्यते सम्पूर्णद्रव्यादिज्ञेयग्राहित्वादिति, तत्रैतस्मिन् पञ्चविधेऽवग्रहेहापायधारणाभेदात्तावदाभिनिबोधिक चतुर्द्धा भवतीति गाथार्थ ॥६१॥ अवग्रहादीनामपि भेदनिरूपणार्थमाह—

**पचहिवि इंदिएहिं मणसा अत्थोग्गहो मुणेयव्वो । चक्खिंदियमणरहियं वंजणमीहाइयं छद्धा ॥६२॥**

अवग्रहो द्विधा व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते-प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जन, किं तत् ?, उच्यते, उपकरणेन्द्रियस्य कदम्बपुष्पाकृते श्रोत्र-

घ्राणरसनस्पर्शनलक्षणस्य शब्दगन्धरसस्पर्शपरिणतद्रव्याणां च य परस्पर सम्बन्ध -प्रथममुपश्लेषमात्रं तदिह व्यञ्जनमुच्यते, अपर चेन्द्रियेणाप्यर्थस्य व्यञ्जनात्वादपी-न्द्रियमिह व्यञ्जनमभिप्रेतं, ततश्च व्यञ्जनेन-इन्द्रियलक्षणेन व्यञ्जनस्य-विषयसम्बन्धलक्षणस्यावग्रहणं-परिच्छेदनमकस्य व्यञ्जनशब्दस्य लोपाद् व्यञ्जनावग्रह , किमपीदमित्य-व्यक्तज्ञानरूपाद्वक्ष्यमाणार्थावग्रहादप्यधः ऽव्यक्ततरज्ञानमात्रमित्यर्थ , अय च नयनमनोवर्जेन्द्रियचतुष्टयभेदाच्चतुर्द्धा, नयनमनसोरप्राप्यकारित्वेन विषयसम्बन्धाभावाद्, व्य-ञ्जनावग्रहस्य चेन्द्रियविषययो सम्बन्धग्राहकत्वादिति भाव , इदमेवाह सूत्रकार **'चक्खिंदियमणरहियं वं** 'मिति चक्षुरिन्द्रियमनोरहित शेषेन्द्रियचतुष्टयविषय व्यञ्जन, व्यञ्जनावग्रहो भवतीत्यर्थ , अर्यत इति अर्थ -शब्दरूपरसगन्धादिस्तस्य शब्दरूपादिभेदानामन्यतरेणापि भेदेनानिर्द्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रह , किमपीदमित्य-व्यक्तज्ञानमित्यर्थ , स च मन सहितेन्द्रियपञ्चकजन्यत्वात्षोढा, एतदेवाह सूत्रकार -**'पंचहिवि इंदिएहिं मणसा अत्थोग्गहो'**त्ति पञ्चभिरपीन्द्रियैर्मनसा च हेतुभूतेनं य उत्पद्यते सोऽर्थावग्रह षड्विधा मुणितव्य , अनयोश्च जायमानयो. पूर्वं व्यञ्जनावग्रहस्ततोऽर्थावग्रह इति क्रम , सूत्रकारेण तु गाथाबन्धानुलोम्यादिकारणात्कुतश्चिदि-त्थं व्यतिक्रमनिर्देश कृत इति भावनीयम्, **'ईहाइयं छद्ध'**त्ति आदिशब्दादपायधारणापरिग्रह , ततश्चाभिनिबोधिकस्येहापायधारणालक्षणमपि भेदत्रयमिन्द्रियपञ्चकमनोजन्य-त्वात्प्रत्येक षड्विध मुणितव्य, तत्रार्थावग्रहेणावगृहीतस्यैव स्थाणवादिवस्तुनोऽपि किमय भवेत् स्थाणुरेव न तु पुरुष इत्यादिरूपेण वस्तुधर्मान्वेषणात्मक ज्ञानचेष्टनमीहा, ईहनमीहेतिकृत्वा 'अरण्यमेतत्सविताऽस्तमागतो, न चाधुना सम्भवतीह मानव । प्रायस्तदेतेन खगादिभाजा, भाव्य स्मरारातिसमाननाम्ना' ॥१॥' इत्याद्यन्वय-धर्मघटनव्यतिरेकधर्मनिराकरणाभिमुख्यालिङ्गितो ज्ञानविशेष ईहेति हृदयम्, ईहितस्यैव वस्तुन स्थाणुरेवायमित्यादिनिश्चयात्मको वाऽवविशेषोऽपाय , इत्थं निश्चितस्यै-वाविच्युतिवासनास्मृतिरूप धरणं धारणा, अत्र चापायेन निश्चिते घटादिवस्तुनि तदुपयोगतोऽन्तर्मुहूर्तमविच्यवनमविच्युति , एकदा पटादिरूपेण निश्चितस्य चार्थस्य सङ्-ख्यातकालभाविनी असङ्ख्यातकालभाविनी वा पुनस्तद्दर्शने या निश्चययोग्यता सा सस्काररूपा वासना, पूर्वदृष्टस्य चार्थस्य कालान्तरे यत्पुनरनुस्मरणं सा स्मृतिरित्येव धारणा त्रिधा भवतीति गाथार्थः ॥६२॥ तदेव निरूपिता [सङ्क्षेपत केचिदाभिनिबोधिकज्ञानभेदा विस्तरतस्तु **सर्वेऽप्यावश्यकादिभ्यो** विज्ञेयो । अथ ,श्रुतावधि-

ज्ञाने किञ्चिद्भेदतो निरूपयितुमाह—

**अंगपविट्ठियरसुय ओहि भवे पतिगुणं च विन्नेयं । सुरनारएसु य भवे भवं पति सेसमियरेसु ॥ ६३ ॥**

श्रुतज्ञानं द्विधा-अङ्गप्रविष्टम्-अङ्गस्वरूपमाचारादिकम्, इतरत्तु-अङ्गबाह्यमावश्यकदशवैकालिकोत्तराध्ययनादिकम्, अवधिज्ञानमपि तावद् द्विविधं विज्ञेयमिति दर्शयति-भवं प्रति गुणं च, प्रतीति सवध्यते, भवप्रत्ययिकं गुणनिमित्तं चेत्यर्थः, तत्र सुरेषु नरकेषु च 'भवे' त्ति भवेत्-सम्पद्येत, कथम्भूतम्? इत्याह-भवं प्रति, भवप्रत्ययिकमेवेतेष्ववधिज्ञानं भवेदित्यर्थः, भवः-सुरलोके नरके च जन्मैव प्रत्ययः-कारणं यस्य न तु तद्व्यतिरिक्तं तपःप्रभृतिगुणान्तरं तद्भवप्रत्ययिकमवधिज्ञानं, स्वावरणक्षयोपशम एव सर्वत्रावधिविज्ञानस्य निमित्तं, केवलं सोऽपि तत्कारणभूतः क्षयोपशमो देवलोके नरकेषु जन्ममात्रानन्तरमेव तपःप्रभृतिगुणानपेक्षः सम्पद्यत इति देवनारकाणां पक्षिणां गगनोत्पतनसामर्थ्यमिव भवप्रत्ययिकमवधिज्ञानमुच्यते, इतरेषु-पुनस्तिर्यग्मनुष्येषु शेषं-भणितपरिशिष्टं गुणप्रत्ययिकमवधिज्ञानं भवेदिति गाथार्थः ॥ ६३ ॥ प्रकारान्तरेणाप्यवधिज्ञानभेदानाह—

**अणुगामि अवट्ठिय हीयमाणयिड त भवे सपडिवक्खं । उज्जुमई विउलमई मणनाणे केवलं एक्कं ॥ ६४ ॥**

अनुगाम्यवस्थितं हीयमानमिति सप्रतिपक्षं तदवधिज्ञानं षोढा भवति, तत्र यस्मिन् प्रदेशे व्यवस्थितस्योत्पन्नं ततोऽन्यत्रापि प्रदेशेषु संचरतो लोचनवद्यदनुगच्छति तदनुगाम्यवधिज्ञानमुच्यते, तत्प्रतिपक्षस्त्वननुगामि यत्प्रदेशान्तरेषु सचरतः स्थानप्रदीपवन्नानुगच्छतीत्यर्थः, अवतिष्ठत इत्यवस्थितम्-अविचलितस्वरूपम्, अवस्थानं चेहावरोगवारत उपयोगतो लब्धितश्च चिन्त्यते, तत्राधार-क्षेत्र, तत्र कस्मिन्नेव क्षेत्रे तयस्त्रिंशत्सागरोपमाण्यवस्थितोऽवधिरनुत्तरसुराणां प्राप्यते, उपयोगतस्तु द्रव्येऽवधिज्ञानस्योपयोग उत्कृष्टतोऽन्तर्मुहूर्तमवतिष्ठते, पर्यायेषु पुनरुत्कृष्टतः सप्त चाष्टौ वा समयानिति, अन्ये त्वभिदधति-पर्यायेषु सप्त गुणेष्वष्टाविति, तत्र सहवर्तिनो गुणाः शुक्लत्वादयः क्रमवर्तिनः पर्याया नवपुराणादयः, यथोत्तरं द्रव्यगुणपर्यायाणां सूक्ष्मत्वात् स्तोकोपयोगतेति भावनीयं, लब्धितस्त्ववस्थानमवधिज्ञानस्य तत्रान्यत्र वा क्षेत्रे उत्कृष्टतः मानिकम्यइ्रष्टि-

सागरोपमाणि भवन्ति, अवस्थितप्रतिपक्षभूतं तु चलं यदनुत्तरसुराणामिव नैकत्र क्षेत्रेऽवतिष्ठते किन्तु अच्युतदेवादीनामिवान्यान्यक्षेत्रेषु संचरति, द्रव्यपर्यायेष्वप्यन्यान्येषु शीघ्रं यद्गच्छति, लब्धितोऽप्युत्कृष्टां स्थितिमसम्पूर्यैव यदपगच्छति पुनश्च भवति तदिह सर्वं चलत्वेन विवक्षितमित्यर्थः, हीयमानं त्वपचीयमानं, सा च हीयमानता क्षेत्रतः कालतो द्रव्यतः पर्यायतश्च, तथाहि क्षेत्रकालावाश्रित्य किञ्चिदवधिज्ञानं प्रभूतविषयत्वेनोत्पद्य पश्चादसङ्ख्यातभागहान्या वा सङ्ख्यातभागहान्या वा सङ्ख्यातगुणहान्या वाऽसङ्ख्यातगुणहान्या वा हीयते न त्वनन्तभागहान्याऽनन्तगुणहान्या वा, क्षेत्रकालयोरनन्तयोरवधेरविषयत्वादेव, द्रव्याण्याश्रित्य पुनर्बहुविषयत्वेन सम्भूय पश्चादनन्तभागहान्याऽनन्तगुणहान्या वाऽपचीयते, द्रव्याणामनन्तानामप्यवधिज्ञानेन दर्शनात्, यथा च पर्यायेषु षड्विधा हानिर्वक्ष्यते तथा द्रव्ये न भवति, तत्स्वाभाव्यादिति, पर्यायानाश्रित्य प्रचुरविषयत्वेनाविर्भावनतोऽनन्तभागहान्या वा असङ्ख्यातभागहान्या वा सङ्ख्यातभागहान्या वा सङ्ख्यातगुणहान्या वाऽसङ्ख्यातगुणहान्या वाऽनन्तगुणहान्या वा हीयते वा, अनन्तेषु द्रव्येष्वनन्तानामपि पर्यायाणामवधिगोचरत्वादिति, हीयमानप्रतिपक्षभूतं पुनर्वर्धमानकं, ततो वर्द्धमानतापि क्षेत्रकालद्रव्यपर्यायेषु वक्तव्या, तथाहि-क्षेत्रकालावाश्रित्य किञ्चिदवधिज्ञानं स्तोकविषयत्वेनोत्पद्य ततोऽसङ्ख्यातभागवृद्ध्या वा सङ्ख्यातभागवृद्ध्या वा सङ्ख्यातगुणवृद्ध्या वाऽसङ्ख्यातगुणवृद्ध्या वा वर्द्धत इत्यादि सर्वं हीयमानकवद्वक्तव्यं, केवलं हानिस्थाने वृद्धिर्वक्तव्या, शेषं प्रायस्तथैवेति। उक्ता अवधिज्ञानस्य षड् भेदाः, अथ मनःपर्यायज्ञानभेदानभिधित्सुराह-'**उज्जुमई**' त्यादि, '**मणनाणे**' त्ति विभक्तिव्यत्ययान्मनःपर्यायज्ञानं द्विविधम्-ऋजुमति विपुलमति चेति, तत्र मननं मतिर्विषयपरिच्छित्तिरित्यर्थः, ऋज्वी-अल्पतरविशेषविषयतया मुग्धा मतिर्यस्य तद् ऋजुमति, विपुला-बहुतरविशेषविषयतया पट्वी मतिर्यस्य तद्विपुलमति, तत्र ऋजुमतेरर्द्धतृतीयाङ्गुलहीनो मनुष्यलोकः क्षेत्रतो विषयः, विपुलमतेस्तु स एव सम्पूर्णो निर्मलतरश्च, कालतस्त्वेतावति क्षेत्रे भूतभाविनो पल्योपमासङ्ख्येयभागगतातीतानागतानि सञ्ज्ञिमनोरूपाणि मूर्त्तद्रव्याणि, द्रव्यतोऽपि चैतान्येव द्रव्याणि, भावतस्तु तत्पर्यायाश्चिन्तनानुगुणपरिणतिरूपाः, चिन्तनीयं तु बाह्यमर्थं मूर्त्तममूर्त्तं वा त्रिकालगोचरमप्यनुमानादेव जानाति, यतः एतत्परिणतान्येतानि मनोद्रव्याणि ततः एतदन्यथानुपपत्तेरयमनेनार्थश्चिन्तित इति लेखाक्षरदर्शनात् तदुक्तार्थमिव प्रत्यक्षीकृत्य मनोद्रव्येभ्यश्चिन्तितमर्थमनुमिमीते न पुनः साक्षाज्जानाति, स चैष बाह्याभ्यन्तररूपो द्विविधोऽपि विषयोऽ-

अवधेर्भेदषट्कम्।

स्फुटतरं स्तोकतरञ्च ऋजुमतेः स्फुटतरं बहुतरञ्च विपुलमतेर्ज्ञेयमनयोर्भेदः । इत्युक्तं भेदतोऽपि मनःपर्यायज्ञानं, केवलज्ञाने तु सर्वावरणक्षयसम्भूतत्वाद् भेदो न तस्य वदन्नाह—'केवल एक' ति एकमेव भेदरहितं केवलज्ञानं, स्वावरणक्षयोपशमवैचित्र्ये हि युक्तं क्षायोपशमिकज्ञानेषु भेदसम्भवोऽस्मिंस्तु समस्तावरणक्षयसम्भूते क्षायिके केवलज्ञाने कुतो भेदसम्भावनाऽपि ? इति गाथार्थः ॥ ६४ ॥ तदेवं निरूपितानि सङ्क्षेपतः पञ्चापि ज्ञानानि, ज्ञानेषु च प्रस्तुतेषु तत्प्रतिपक्षभूतानि मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणान्यज्ञानान्यपि त्रीणि वक्तव्यानि, तत्र मतिज्ञानमपि मिथ्यादृष्टेर्मत्यज्ञानमुच्यते, तथा श्रुतज्ञानमपि तस्य श्रुताज्ञानमभिधीयते, एवं तस्यावधिरपि विभङ्ग उच्यते, ननु कथं मिथ्यादृष्टेर्ज्ञानमपि अज्ञानमुच्यते ?, ज्ञानकार्याकरणात्, ज्ञानस्य हि तत्त्वावगमः फलं, न च मिथ्यादृष्टेर्नास्त्येव, यथा पुत्रकार्याकरणात्पुत्रोऽप्यपुत्र उच्यते वस्तुकार्यासमर्थत्वाद्वस्त्वप्यवस्तु व्यपदिश्यते, एवं ज्ञानकार्याक्षमत्वात् मिथ्यादृष्टेर्ज्ञानमप्यज्ञानमुच्यते ॥ साम्प्रतमेषु ज्ञानेष्वज्ञानेषु च गुणस्थानलक्षणा जीवसमासाश्चिन्तनीया इत्यत आह—

**मइसुय मिच्छा साणा विभंग समणे य मीसए मीस । सम्मछउमाभिणिसुओहि विरयमण केवल सनामे ॥ ६५ ॥**

'मइसुय' त्ति एकदेशेन समुदायस्य गम्यमानत्वान्मत्यज्ञानश्रुताज्ञाने मिथ्यादृष्टौ सास्वादने च तते स्थावरे समनस्के अमनस्के च सामान्येन लभ्येते, 'विभंग समणे य' त्ति तस्मिन्नेव मिथ्यादृष्टौ सासादने च विभङ्गं, चकारस्यैवकारार्थत्वात्समनस्के संज्ञिन्येव प्राप्यते, असंज्ञिनः पारभविकस्य ताद्भविकस्य च विभङ्गस्यासम्भवादिति, सास्वादनसम्यग्दृष्टेश्च यद्यपि सम्यक्त्वलेशः कोऽपि प्राप्यते तथाऽप्यनन्तानुबन्ध्युदयदूषितत्वादज्ञानित्वेनैवागमे विवक्षित इति भावनीयं, 'मीसए मिस्स' त्ति मिश्रे सम्यग्मिथ्यादृष्टिरित्यत्र मतिश्रुतावधिविषयं 'मिश्रं' ज्ञानाज्ञानस्वरूपं प्राप्यते, व्यवहारनयमताश्रयणेनैवेत्थमुक्तं, व्यवहारनयो हि स्थूलत्वादित्थं मन्यते, यथा नात्यन्तमेकान्तेन सम्यग्दृष्टिर्नापि मिथ्यादृष्टिः किन्तु मिश्रः सम्यग्मिथ्यादृष्टिस्ततोऽस्य मतिश्रुतावधिज्ञानत्रयमपि नैकान्तेन ज्ञानं नाप्यज्ञानं, किन्तु ज्ञानाज्ञानस्वरूपं मिश्रमुच्यत इति, निश्चयनयस्तु मन्यते-सम्यग्बोधो ज्ञानं ततोऽन्यदशतोऽप्यसम्यग्भावेन दूषितं सर्वमज्ञानमेव, अंशतोऽपि हि विषेणोपमस्तथ्यमसमपथ्यमेव, अशुचिलवेनापि मिश्रितं जलाद्यशुच्येव, एवमल्पेनापि मिथ्याभावेन दूषितमज्ञान-

ज्ञानेषु गुणस्था-
नकानि गा ६५

संयमादौ गुणस्थानकानि गा ६६ ।

मेव, तस्मान्मत्यज्ञानश्रुताज्ञानविभंगलक्षणमज्ञानत्रयमेवास्य प्राप्यते न मिश्रं, स्थानान्तरेषु च सर्वेषु प्रायोऽज्ञानित्वेनैवाय निर्दिष्ट इति मन्तव्य, 'सम्मछउमाभिणिसुयोहि'त्ति अविरतसम्यग्दृष्टिमादौ कृत्वा क्षीणकषायछद्मस्थमन्ते व्यवस्थाप्य नवसु गुणस्थानकेष्वाभिनिबोधिकश्रुतावधिलक्षण ज्ञानत्रयं लभ्यत इत्यर्थ, 'विउमण' त्ति विरत-प्रमत्तसंयत पुनरादौ कृत्वा क्षीणकषायछद्मस्थमेवान्ते विधाय सप्तसु गुणस्थानकेषु चतुर्थं मनःपर्यायज्ञानमपि प्राप्यते, मनःपर्यायज्ञानस्य न प्रतिपत्ता यद्यप्यप्रमत्त एव भवति तथाऽपि पूर्वप्रतिपन्न प्रमत्तोऽपि स्यादिति प्रमत्ते तत्सद्भावो न विरुध्यते, 'केवलसनामे' त्ति समान नाम यस्यासौ सनामा तस्मिन् सनाम्नि केवलिनीत्यर्थः, केवलं प्राप्यते, केवलज्ञानं केवलज्ञानिनि लभ्यत इत्यर्थ, न च वक्तव्य मत्वर्थीयेन समाननामता विहन्यते, तावन्मात्रभेदस्याविवक्षितत्वादिति, न च केवली सयोग्ययोगिगुणस्थानकभेदाद् द्विधा, तत केवलज्ञानमेतस्मिन् गुणस्थानद्वये प्राप्यत इति तात्पर्यमिति गाथार्थः ॥ ६५ ॥ उक्त ज्ञानद्वारमथ संयमद्वारमभिधीयते

**अजया अविरयसम्मा देसविरया य हुंति सट्ठाणे । सामाइयछेयपरिहारसुहुमअहक्खाइणो विरया ॥ ६६ ॥**

अविरतसम्यग्दृष्टेरारभ्यार्वाग्वर्त्तिनः सर्वेऽप्ययता -असयता, मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिषु तावदसंयम एव प्राप्यत इत्यर्थ, देशविरतास्तु स्वस्थान एव भवन्ति, देशतो विरतिश्च तेषा स्वस्थाने, तत संयमासंयमस्तेषु प्राप्यत इति हृदय, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायसयथाख्यातचारित्रिणस्तु विरता -सर्वविरतिसंयमिनो भवन्ति, इदमुक्तं भवति सामायिकादिषु पञ्चसु चारित्रेषु संयमो लभ्यते, देशविरतौ तु संयमासंयमः, शेषेषु तु निर्दिष्टस्थानेष्वसंयम एवेति, किस्वरूपाणि पुनस्तानि सामायिकादीनि पञ्च चारित्राणि यानि संयमत्वेन प्रतिपत्तव्यानि ? इति, अत्रोच्यते-समो-रागद्वेषरहितस्तावदभिधीयते, तस्यायो-लाभः समायः, समो हि प्रतिक्षणमपरापरैर्विशुद्धतमैर्ज्ञानदर्शनचारित्रपर्यायैर्युज्यत एवेति, समाय एव सामायिक, चारित्रावरणीयकर्मक्षयोपशमजन्यः सर्वविरतिरूपो जीवपरिणामविशेष इत्यर्थ, पञ्चप्रकारमपि च चारित्रं सामान्यतः सामायिकमुच्यते, केवल यत्र छेदोपस्थापनादयो विशेषा संभवन्ति तत्तैरेव विशेषैर्व्यपदिश्यते, यत्र तु ते विशेषा न संभवन्ति तन्निर्विशेषण सामान्येन सामायिकमुच्यते, तच्च द्विधा-इत्वर यावत्कथिक च, तत्रेत्वरं स्वल्पकालीनमुच्यते, तच्च भरतैरवतेषु प्रथमपश्चिमतीर्थकरतीर्थयोरनारोपितव्रतस्य शिष्यकस्य विज्ञेयं,

ग्यमानकं तूपशमश्रेणिं प्रत्यासन्नस्य ४, यथैवाख्यातं सोऽकषायतया चारित्रं विशुद्धं भवति सिद्धान्ते समाख्यातं, ततश्च यथैवाख्यातं समयं तथैव यद्वर्तते चारित्रं तद् यथाख्यातं, सर्वथैव कषायोदयरहितमित्यर्थः, इदमपि द्विधा-छद्मस्थयथाख्यातचारित्रं केवलियथाख्यातचारित्रं च, पुनरप्याद्यं द्विधा-उपशान्तमोहछद्मस्थयथाख्यातचारित्रं क्षीणमोहछद्मस्थयथाख्यातचारित्रं च, इतरदपि द्विधा-सयोगिकेवलियथाख्यातचारित्रमयोगिकेवलियथाख्यातचारित्रं चेति ५। तदेवमेतानि पञ्च चारित्राणि संयमस्थानेन प्रतिपत्तव्यानीति स्थितमिति गाथार्थः ॥ ६६ ॥ तदेवं निरूपितं संयमस्वरूपं, तन्निरूपणतस्त्वसंयमः संयमासंयमश्च निरूपितः, साम्प्रतं संयमत्वेनैव निरूपितेषु सामायिकादिचारित्रेषु गुणस्थानलक्षणान् जीवसमासान्निरूपयितुमाह-

सामाइयछेया जा नियट्टि परिहारमप्पमत्त ता। सुहुमा सुहुमसरागे उवसंताइ अहक्खाया ॥ ६७ ॥

सामायिकच्छेदोपस्थापनीया भवन्ति, कियद्दूरं यावत्? इत्याह-'जा नियट्टि' त्ति प्रमत्तसंयतलक्षणात् षष्ठगुणस्थानकादारभ्यानिवृत्तिबादरसम्परायलक्षणं नवमं गुणस्थानकं यावदिति, प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसम्परायलक्षणाश्चत्वारो जीवसमासाः सामायिकच्छेदोपस्थापनीयचारित्रलक्षणे संयमे वर्तन्त इत्यर्थः, षष्ठगुणस्थानकादारभ्येति एतच्च सूत्रेऽनुक्तमपि लभ्यते, देशविरतिपर्यन्तेषु पञ्चसु जीवसमासेषु सर्वचारित्रस्य सर्वथैवासम्भवादिति, परिहारविशुद्धिकसंयमे प्रमत्तान्ता जीवा लभ्यन्ते, प्रमत्ताप्रमत्तगुणस्थानवर्तिनो जीवाः प्रोक्ते सामायिकच्छेदोपस्थापनीयलक्षणे परिहारविशुद्धिरूपे च संयमे वर्तन्त इत्यर्थः, अपूर्वकरणादीनि च गुणस्थानकानि परिहारविशुद्धिसंयतेन न प्राप्यन्ते, तेषां श्रेणिद्वयारोहण एव सम्भवाच्छ्रेणिद्वयारोहणस्य च कैश्चिन्मतेन परिहारविशुद्धिकचारित्रिणो निषेधादिति। 'सुहुम' त्ति सूक्ष्मसम्परायगुणस्थानसम्भविनो जीवाः सूक्ष्मसम्परायसंयमे वर्तन्ते नान्यत्रेति, उपशान्तमोहादयस्तु यथाख्यातचारित्रिणः, उपशान्तमोहक्षीणमोहसयोगिकेवल्ययोगिकेवलिलक्षणाश्चत्वारो जीवसमासा यथाख्यातचारित्रं लभन्त इत्यर्थः। तदेवं चिन्तिताः संयमे जीवसमासाः, असंयमे तु मिथ्यादृष्ट्यादयोऽविरतसम्यग्दृष्टिपर्यन्ताः, संयमासंयमे तु देशविरताः अनन्तरगाथायामेव निरूपिता इति गाथार्थः ॥ ६७ ॥ तदेवं सामायिकच्छेदोपस्थापनीयादिरूपतया संयमं निश्रित्य चिन्तितास्तत्र जीवसमासाः, आगमे तु पुलाक-

बकुशकुशीलनिर्ग्रन्थस्नातकरूपाः पञ्चश्रमणाः प्रज्ञप्ते, अतस्तच्चरणपरिणामात्मकोऽपि मयम गभवति, ततस्तमनुपदर्शयितु पुलाकादीन् श्रमणान् निरूपयन्नाह--

**समणा पुलाय वउसा कुसील निग्गंथ तह सिणाया य । आइतिय सकसाई विगय छउमा य केवलिणो ॥ ६८ ॥**

श्राम्यन्तीति श्रमणाः साधवश्चारित्रिणः, के पुनस्ते इत्याह---'पुलाय वउसे' त्यादि, पुलाका बकुशाः कुशीला निर्ग्रन्थाः स्नातकाश्चेति, एतेषां च पुलाकादीनां सर्वेषां सामान्यतश्चारित्रसद्भावेऽपि मोहनीयकर्मक्षयोपशमादिवैचित्र्याद्भेदोऽवगन्तव्यः, तत्र पुलाको-निस्सारः पलि-जम्पस्य धान्यस्य कणस्तद्वच्च यः संयमसारयुक्तः ज्ञानदर्शनचारित्रातिप-जीवनात्संयमसारं रफेटयन्तो येऽसारास्त पुलाकाः, पुलाका इव पुलाका इतिकृत्वा, बकुशं शबलं कर्बुरं इत्यनर्थान्तरं, एवम्भूतश्च सातिचारत्वात्संयमोऽस्याभिप्रेन, ततश्च बकुशसंयमयोगात्साधवोऽपि बकुशाः सातिचारत्वाच्छबलचारित्रिण इत्यर्थः, मूलोत्तरगुणविराधनात् सञ्ज्वलनकषायोदयाद्वा कुत्सितं शीलं - चारित्रं येषां ते कुशीलाः, निर्गता मोहनीयकर्मलक्षणाद् ग्रन्थादिति निर्ग्रन्थाः, घातिकर्ममलपटलक्षालनात्स्नाता इव स्नातकाः-केवलिनः, तत्र पुलाका द्विविधाः--लब्धिपुलाकाः प्रतिसेवापुलाकाश्च, तत्र लब्धिपुलाका लब्धिविशेषयुक्ताः, यदाह--"संघाइयाण कज्जे चुण्णिज्जा चक्कवट्टिमवि जीए । तीए लद्धीए जुओ लद्धिपुलाओ मुणेयव्वो ॥ १ ॥" अन्ये त्वाहुः-- आसेवनतो यो ज्ञानपुलाकस्तस्यैवमीदृशी लब्धिः, स एव च लब्धिपुलाको, न तद्व्यतिरिक्तः कश्चिदपर इति, प्रतिसेवापुलाकास्तु पञ्चविधाः--ज्ञानदर्शनचारित्रलिङ्गयथासूक्ष्मप्रतिसेवकाश्च, आह च -- 'खलियाइदूसणेहिं नाणं सकाइएहिं सम्मत्तं । मूलुत्तरगुणपडिसेवणाइ चरणं विराहेइ ॥ १ ॥ लिंगपुलाओ अन्नं निक्कारणओ करेइ जो लिंगं । मणसा अकप्पियाणं निसेवओ होअहासुहुमो ॥ २ ॥" इति १, बकुशा अपि द्विधा --उपकरणबकुशाः शरीरबकुशाश्च, तत्र वस्त्रपात्राद्युपकरण-प्रक्षालनादिविभूषानुवर्तका उपकरणबकुशाः, करचरणमुखादिशरीरावयवानां समस्तशरीरस्य वा प्रक्षालनादिविभूषानुवर्तिनः शरीरबकुशाः, एते च द्विविधा अपि सामान्यतः पञ्चविधास्तद्यथा-आभोगबकुशा अनाभोगबकुशाः संवृतबकुशा असंवृतबकुशाः सूक्ष्मबकुशाः, तत्राभोगः --साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवं ज्ञानं तत्प्रधाना बकुशा आभोगबकुशाः, तद्विपरीतास्त्वनाभोगबकुशाः, संवृता-गुप्ता लोकेऽविज्ञातदोषाः संवृतबकुशाः, तद्विपरीतास्त्वसंवृतबकुशाः, नेत्रमुखप्रक्षालनादिसूक्ष्म-

पुलाकादिषु गुणस्थानकानि गा ६८ ।

दोषा सूक्ष्मवकुशा, उक्तञ्च—"आभोगे जाणतो करेइ दोसे अजाणमणभोगो । लोए जाणिज्जंतो असवुडो सवुडो इयरो ॥ १ ॥ अच्छिमुह मज्जमाणो होइ अहा-सुहुमओ तहा वउसो ॥" इत्यादि, एते च वकुशा सामान्येन ऋद्धियशस्कामा सातगौरवाश्रिता अविविक्तपरिवाराश्छेदयोग्यशवलचारित्रयुक्ता अवगन्तव्या, तत्र ऋद्धि-प्रचुरवस्त्रपात्रादिप्राप्तिर्यश-ख्यातिगुणस्तत्कामका, सात-सुखं तत्र गौरव-आदरस्तदाश्रिता, अविविक्त:-असंयमात् अपृथग्भूत समुद्रफेनादिना निघृष्टजङ्घ-रतैलादिना विहितशरीरमृज कर्तरिकाकल्पितकेश परिवारो येषा तेऽविविक्तपरिवारा, छेदयोग्य शवलमतिचारकर्बुरं यच्चारित्र तेन युक्ता २, कुशीला द्विविधा-प्रतिसेव-नाकुशीला कषायकुशीलाश्च, तत सेवना-सदमस्य सम्यगाराधना तत्प्रतिपक्षस्तु प्रतिसेवना तया कुशीला प्रतिसेवनाकुशीला, कषाये सञ्ज्वलनक्रोधाद्युदयलक्षणे कुशीला कषायकुशीला, तत्र प्रतिसेवनाकुशीला पञ्चविधा-ज्ञानदर्शनचारित्रलिङ्गप्रतिसेवका सूक्ष्मप्रतिसेवकाश्च, तत्र ज्ञानदर्शनचारित्रलिङ्गान्युपजीवस्तत्प्रतिसेवक उच्यते, एष एव शोभनस्तपस्वीत्यादिप्रशसया तु यस्तुष्यति स सूक्ष्मप्रतिसेवक, उक्तञ्च—"इह नाणाइकुसीलो उवजीव होइ नाणपभिईए । अहसुहुमा पुण तुस्स एस तवस्सित्ति संसाए ॥ १ ॥" कषायकुशीला अपि पञ्चविधा-ज्ञानदर्शनचारित्रलिङ्गकषायकुशीलो सूक्ष्मकषायकुशीलाश्च, तत्र ज्ञानदर्शनचारित्रलिङ्गानि सञ्ज्वलनक्रोधकषाया-द्युपयुक्तो य स्वस्वविषये व्यापारयति स तत्तत्कषायकुशील उच्यते, कषायाविष्ट एव य कस्यापि शापं प्रयच्छति स चारित्रकषायकुशील, मनसा तु क्रोधादीन् कुर्वन् सूक्ष्मकषायकुशील, अथवा सञ्ज्वलनक्रोधादिकषायाविष्ट एव ज्ञानदर्शनचारित्रलिंगानि यो विराधयति-अतिचारमलिनानि करोति स ज्ञानादिकषायकुशील, सूक्ष्मक-षायकुशीलस्तु तथैव, आह च—"नाण दसण लिग जो जुजइ कोहमाणमाईहि । सो नाणाइकुसीलो कसायकुसीला उ सावेस ॥ १ ॥ अहवा कोहाईहि नाणाइविराहओ कुसीलत्ति । मणसा कोहाईए कुव्वतो होइ सुहुमो उ ॥ २ ॥" उक्ता द्विविधा अपि कुशीला इति ३ निर्ग्रन्था द्विविधा-उपशान्तमोहा क्षीणमो-हाश्च, एतत्स्वरूप तु प्रागेव निरूपित स्नातकास्तु सर्वोपाधिव्यतीतत्वान्निरुपचरितभेदासम्भवत एकप्रकारा एवेति । एतेषा च पुलाकादीना व्याख्याप्रज्ञप्तौ—"पण्ण-वणे वेय रागे कप्प चरित्त पडिसेवणा नाणे" इत्यादि यथोक्तै षट्त्रिंशता द्वारैर्विचारोऽस्ति, तत्र बहुतरोपयोगीनि कानिचिद् द्वाराण्यत्रापि लिख्यते तत्र वेदद्वारे पुलाकाना

तस्मात् प्राप्यान्तकृत्केवलिनो भवन्ति, प्रागुक्तनिर्ग्रन्थस्नातकभावानां त्वपहरणं समयनिवारितं, पुलाकानां तु सर्वथैव तन्निषिद्धं, यदाह—"समणीमवगयवेयं परिहारपुलायमप्पमत्तं च । चउदसपुव्वि आहारगं च न य कोइ संहरति ॥ ५ ॥" चारित्तशुद्धिद्वारे, पुलाकाद् बकुशप्रतिसेवनाकुशीलावनन्तगुणविशुद्धौ कषायकुशीलेन तु सहागौ षट्स्थानपतितं, निर्ग्रन्थस्नातकौ तु चारित्रविशुद्ध्या परस्परं तुल्यौ, पुलाकादिभ्यस्तु सर्वेभ्योऽप्यनन्तगुणविशुद्धाविति ६, परिमाणद्वारे पञ्चदशस्वपि कर्मभूमिषु पुलाकाः कदाचिद् भवन्ति कदाचिन्न भवन्ति, यदा भवन्ति तदा जघन्यत एकादिकाः उत्कृष्टतस्तु सहस्रपृथक्त्वं बकुशास्तु सर्वदैव प्राप्यन्ते, ते च जघन्यतः कोटिशतपृथक्त्वमुत्कृष्टतोऽपि कोटिशतपृथक्त्वम्, एवं प्रतिसेवनाकुशीला अपि वाच्या, कषायकुशीला अपि सर्वदा लभ्यन्ते, ते तु जघन्यतः कोटिसहस्रपृथक्त्वमुत्कृष्टतोऽपि कोटिसहस्रपृथक्त्वं निर्ग्रन्थाः कदाचित् प्राप्यन्ते कदाचित् न प्राप्यन्ते, यदा प्राप्यन्ते तदा जघन्यत एकादिः उत्कृष्टतस्तु शतपृथक्त्वं, स्नातकाः पुनः सर्वदा भवन्ति, ते च जघन्यतः कोटिपृथक्त्वमुत्कृष्टतोऽपि कोटिपृथक्त्वमिति ७, तदेवं निरूपिताः पुलाकादयः पञ्चापि श्रमणाः, एतेषु भगवतीग्रन्थोक्तषट्त्रिंशद्द्वाराणां मध्ये शेषद्वारोपलक्षणार्थं कषायद्वारं सूत्रकार एव चिन्तयन्नाह—'आइतिय'मित्यादि, आदौ त्रिकमादित्रिकं-पुलाकबकुशकुशीललक्षणं 'सकसाइ'त्ति सह कषायैः सञ्ज्वलनक्रोधादिभिर्वर्त्तत इति सकषायं भवति, इदमुक्तं भवति-प्रतिसेवनाकषायकुशीलभेदतः कुशीला पूर्वं द्विधा प्रोक्ता, तत्र पुलाकबकुशप्रतिसेवनाकुशीलास्तावदुपशमश्रेणिद्वयमध्येऽन्यतरामपि श्रेणिं न प्रतिपद्यन्ते, तथाविधविशुद्ध्यभावात्, अतः सञ्ज्वलनक्रोधमानमायालोभलक्षणेषु चतुर्षु कषायेष्वेते वर्त्तन्ते, कषायकुशीलास्तु श्रेणिद्वयमपि प्रतिपद्यन्ते, सूक्ष्मसम्परायं यावत्कषायकुशीलव्यपदेशभाजः अत एतेऽपि सञ्ज्वलनेषु क्रोधमानमायालोभेषु वर्त्तन्ते, क्रोधे तूपशमात्क्षपणाद्वाऽपगते मानमायालोभेषु, माने त्वपगते मायालोभयोर्मायाऽपगमे पुनर्लोभे वर्त्तन्ते, ततो व्यवस्थितमिदं-यत्पुलाकबकुशकुशीलाः सकषाया एव भवन्ति, अकषायतायां निर्ग्रन्थस्नातकत्व-प्राप्तेरिति भावः, 'छउमा य'त्ति छद्मस्थशब्देनेह निर्ग्रन्था गृह्यन्ते, क्रमप्राप्तत्वात्, ते च कथम्भूता भवन्ति ? इत्याह—'विराय'त्ति विगतः-क्षीण उपशान्तो वा मायालोभात्मको रागो येषां ते विरागा भवन्ति निर्ग्रन्थाः, विगतद्वेषा इत्यपि गम्यते, क्रोधमानात्मकद्वेषापगमस्य यथोक्तरागापगमस्य समये निर्णीतत्वात्, अतः स्थितः

पुलाकादिस्वरूपम् ।

चक्षुर्दर्शनादिषु गुणस्थानानि गा ६६

मेतत्-निर्ग्रन्था सर्वथैव कषायोदयरहिता भवन्ति, स्नातकास्तु केवलिनो ज्ञातव्या, इदमुक्तं भवति-न केवलं कषायाभावो ज्ञानावरणादिकर्म्मणामपि तेष्वभावस्तत्त-द्भावे केवलित्वायोगादिति, इह च स्नातका इत्यनुक्तमपि लभ्यतेऽन्येषां केवलित्वासंभवात्, तदेवं तुलादण्डन्यायेन मध्यगतस्यास्य कषायद्वारस्य ग्रहणे शेषाणामप्या-द्यन्तभूतानां भगवतीग्रन्थोक्तद्वाराणामिह ग्रहणं वेदितव्यं, तानि च पुलाकादिषु कानिचित्पूर्वं वृत्तौ चिन्तितानि, शेषाणि तु भगवत्युक्तानुसारेण स्वयमपि चिन्त-नीयानीति गाथार्थः ॥ ६८ ॥ तदेवं पुलाकादिश्रमणस्वरूपभणनेन तच्चरणपरिणामात्मकोऽपि संयमः संभवतीति दर्शितम्। अथैतस्मिन्नपि संयमे गुणस्थानलक्षणा जीवसमासाश्चिन्तनीया, संयमस्य च निराधारो न संभवति, आधारश्चात्र पुलाकादयः प्रस्तुता अतस्तेषु तच्चिन्ता क्रियते, तत्र पुलाकबकुशप्रतिसेवनाकुशीलेषु प्रमत्ताप्रमत्तगुणस्था-नद्वयं प्राप्यते, न शेषाणि, चारित्रगुणयुक्तत्वेनैतेषु मिथ्यादृष्टित्वाद्यसम्भवात्, श्रेणिद्वयानारोहणेन चापूर्वकरणत्वाद्ययोगादिति, कषायकुशीलेषु तु प्रमत्ताप्रमत्तापूर्व-करणानिवृत्तिबादरसूक्ष्मसम्परायलक्षणानि पञ्च गुणस्थानकानि लभ्यन्ते कारणं तु प्रागेवोक्तप्रायमेव, निर्ग्रन्थेषूपशान्तमोहक्षीणमोहलक्षणं गुणस्थानद्वयमवाप्यते, स्नातकेषु तु सयोग्ययोगिगुणस्थानकद्वयं भवति। तदेवं सामायिकच्छेदोपस्थापनीयादिरूपः पुलाकादिचरणपरिणामात्मकश्चोक्तः संयमः, प्रत्येकं च चिन्तितास्तत्र जीवसमासास्तथा च सत्यवसितं संयमद्वारमथ दर्शनद्वारमभिधित्सुराह—

**चउरिंदियाइ छउमे चक्खु अचक्खू य सव्व छउमत्थे। सम्मे य ओहिदंसी केवलदंसी सनामे य ॥ ६६ ॥**

तत्र चक्षुरचक्षुरवधिकेवलभेदाद्दर्शनं चतुर्द्धा, इदं चातिप्रतीतमिति सूत्रकृता स्वरूपतो न निर्दिष्टमतो विनेयजनानुग्रहार्थं वयमेव किञ्चित्तत्स्वरूपं निरूपयाम, तत्र दृश्यतेऽनेनेति दर्शनं, दृष्टिर्वा दर्शनं, सामान्यविशेषात्मके वस्तुनि सामान्यग्राहको बोध इत्यर्थः, यथा वनं सेना ग्रामो नगरमित्यादि, चक्षुषा वस्तुसामान्यांशग्रहणात्मकं दर्शनं चक्षुर्दर्शनम् १, अचक्षुषा-चक्षुर्वर्जेन्द्रियचतुष्टयेन दर्शनं यथोक्तरूपं तदचक्षुर्दर्शनम् २, चक्षुरादिकरणग्रामनिरपेक्षबोधात्मकोऽवधिरेव दर्शनं-वस्तुसामान्यांशग्रह-णमवधिदर्शनम्, अथवा रूपिद्रव्यग्रहणात्मिका मर्यादाऽवधिस्तेन दर्शनमवधिदर्शनं, केवलं-पूर्वोक्तशब्दार्थं तेन दर्शनं-यथोक्तरूपं केवलदर्शनम्, उक्तं स्वरूपतो दर्शनचतुष्टयमथ

॥ ६० ॥

तत्र गुणस्थानकलक्षणा जीवसमासाश्चिन्तनीया', ते च प्रस्तुतगाथया मूलकृताऽपि चिन्तिता अत. सैव व्याख्यायते-'**चउरिंदिया**' इति, चतुरिन्द्रिया आदिर्यस्य पञ्चेन्द्रियादेरसौ चतुरिन्द्रियादिर्मिथ्यादृष्टिरिति शेष, ततश्चतुरिन्द्रियादिमिथ्यादृष्टेरारभ्य '**छउमे**'त्ति क्षीणकषायछद्मस्थ यावत् '**चक्खु**'त्ति चक्षुर्दर्शन प्राप्यते, मिथ्यादृष्ट्यादिषु क्षीणमोहान्तेषु द्वादशसु गुणस्थानकेषु चक्षुर्दर्शन भवतीत्यर्थ, यच्चेह चतुरिन्द्रियादित्वेन चक्षुर्दर्शनाभावादिति मिथ्यादृष्टेर्विशेषणं तदेकेन्द्रियद्वीन्द्रियत्रीन्द्रियाणा मन्तव्य, सयोग्ययोगिकेवलिनोस्तु चक्षुर्दर्शनं न संभवति, 'अतीन्द्रिया केवलिन' इति वचनादिति' **अचक्खु य सव्वछउमत्थे**'त्ति सर्वस्मिन्नपि छद्मस्थेऽचक्षुर्दर्शनं लभ्यत इत्यर्थ- इदमुक्त भवति-चक्षुर्दर्शनचिन्तायां ये त्रीन्द्रियान्ता जीवा वर्जितास्तेऽप्यचक्षुर्दर्शनमवाप्यतेऽतस्तेऽपि नेह वर्जनीया, स्पर्शनादीन्द्रियाणा तेषु सद्भावात्, तत्सद्भावे चाचक्षुर्दर्शनस्याव्याहतत्वात्, एव च सत्यनन्तरोक्तेषु द्वादशगुणस्थानेषु सामान्येनैव सर्वत्राचक्षुर्दर्शनमवाप्यत इतिस्थित, '**सम्मे य ओहिदंसि**' त्ति अविरतसम्यग्दृष्टेरारभ्य क्षीणमोहगुणस्थानकमेव यावदवधिदर्शनमवाप्यते, परत केवलित्वेन मिथ्यादृष्ट्यादीना च विभङ्गज्ञानित्वेनावधेरभावात्, अपरे तु मिथ्यादृष्ट्यादीनामप्यवधिदर्शनं प्रतिपद्यन्ते पर तन्मतमिह नाश्रितं, '**केवलदंसी सनामे य**' त्ति समान नाम ययोस्तौ सनामानौ तयो सनाम्नो सयोग्ययोगिकेवलिनो- केवलदर्शनं लभ्यते, केवलदर्शनेन चाभ्या समाननामत्व केवलशब्दप्रवृत्तिमात्रकृत वेदितव्यमिति गाथार्थ ॥६८॥ उक्त दर्शनद्वारमथ लेश्याद्वारमुच्यते, तत्र 'लिश श्लेषणे'लिश्यते-संश्लिष्यते:कर्म्मणा जीवो यकाभिस्ता लेश्या सकलकर्मप्रकृतिनिष्यन्दभूतकृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसाहायस्य जीवस्याशुभा शुभाश्च परिणामविशेषा इति हृदयं, यदाह-"*कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मन । स्फटिकस्येव तत्राय, लेश्याशब्द प्रयुज्यते ॥ १ ॥*" एताश्च परिणामविशेषात्मिका लेश्या कृष्णा नीला कापोती तेजसी पद्मा शुक्ला त्येवंभूतैर्नामभिर्विशेषिता षट् भवन्ति, तासु चाद्यास्तिस्रोऽशुभा अपरास्तु शुभा, एतासा च विशेषत स्वरूपावगमार्थं जम्बूखादकदृष्टान्तो ग्रामघातकदृष्टान्तश्चोच्यते-तत्रै कस्मिन् महाकानने बुभुक्षातुरा षट् पुरुषा सुविशेषविपक्वसरसफलप्राग्भारावनमितसकलशाखाग्रं सकलशाखाग्रनिलीनमत्तमधुपमधुकरीरवापूर्यमाणसकलदिक्चक्रवाल सकलदिक्चक्रवालमिलत्सकुन्तसन्दोहसमारब्धबहलकोलाहलं सकुन्तसन्दोहसमारब्धबहलकोलाहलप्रीयमाणच्छायाविश्रान्तापहस्तितश्रमपथिकजनसमाजश्रवणयुगल युगलधर्मसमयस्मृतिसमाधान-

समर्थकल्पद्रुमाकारं विश्राणमेक महाजम्बूवृक्षमद्राक्षु, तत सर्वैरपि हर्षमागतैरभिहितम्-अहो अवसरप्राप्तमस्य दर्शनं तस्मान्निवर्तामो बुभुक्षा भक्षयामो निर्जिच्छयाऽस्य सरसफलानि. इत्येकवाक्यताया सत्या तन्मध्ये क्लिष्टपरिणामेनैकेन प्रोक्तं-युक्तमिद केवलमस्मिन्नारोहता जीवितव्यस्यापि सन्देहस्तस्मात्तीक्ष्णकुठारैरामूलत एव कर्तयित्वा तिर्यगेन प्रपात्य सुखेनैव सर्वफलानि भुञ्जीमहि, एष एवजातीय कृष्णलेश्यापरिणाम १ द्वितीयेन तु किञ्चित्सशूकेनोक्तं-किमस्माकमेतावत्प्रमाणेनैतेन महावृक्षेण कर्तितेन?, महती शाखामेवैकामस्य सम्बन्धिनीं कर्तयित्वा पातयामस्ततस्तत्फलान्यभ्यवहराम, एवप्रकारस्तु नीललेश्यापरिणाम २ तृतीयस्त्वाह- कि तयाऽपि महाशाखया कर्तितया, तदवयवभूता एव लघुतराः प्रशाखाश्छिद्य इत्येवविध कापोतलेश्यापरिणामः ३ चतुर्थस्तु जगाद-कि ताभिरपि वराकीभि छिन्नाभि?, तत्पर्यन्तवर्तिन गुच्छ्छानेव कर्तयाम, अथ तेजसलेश्यापरिणाम ४ पञ्चमस्तु ब्रूते-गुच्छैरपि कि छिन्नै?, तन्मध्यात्परिपक्वानि भक्षणयोग्यानि कानिचित्तत्फलान्येव गृह्णीम इत्येष पद्मलेश्यापरिणाम ५ षष्ठस्त्वभिधत्ते-तैरपि किमुच्चितै?, यावद्भिरस्माक प्रयोजन तावन्ति फलान्यस्य वृक्षस्याधस्तादपि पतितानि प्राप्यन्ते, तद्दरं तैरेव प्राणवृत्ति कल्पयाम, किमतन्मोटनभञ्जनादिसन्तापेनेत्येवजातीय शुक्ललेश्यापरिणाम इति जम्बूखादकदृष्टान्त १ ॥ अथ ग्रामघातकाना दृष्टान्त उच्यते-तत्र षड्भिस्तस्करनायकैर्मिलित्वा धनधान्याद्यपहारनिमित्त कस्मिश्चिद्ग्राम किल धाटी प्रक्षिप्ता, तत्रैकेन प्रोक्त-द्विपदचतुष्पदपुरुषस्त्रीबालवृद्धादिक यत्किमपि पश्यथ तत्सर्व मारयतेत्येवजातीय. कृष्णलेश्यापरिणाम १ द्वितीयस्तु नीललेश्यापरिणामयुक्तः प्राह-मानुषाण्येव मारयत कि तिर्यग्भिरिति २ तृतीयस्तु कापोतलेश्यापरिणामान्वित प्राह-पुरुषानेव विनाशयत, कि स्त्रीभिरिति ३ चतुर्थः पुनस्तेजसलेश्यापरिणामवर्ती जगाद-पुरुषेष्वपि सायुधानेव घातयत, किं निरायुधैरिति ४ पञ्चमस्तु पद्मलेश्यापरिणामयुक्तोऽवादीत्-सायुधेष्वपि युध्यमानानेव निगृह्णीत, कि शेषैर्निरपराधैरिति ५ षष्ठस्तु शुक्ललेश्यापरिणामसम्पन्न प्रतिपादयति-हन्त सर्वमिदमयुक्त, यत एक तावत् धन हरथ अपर च लोकमेन वराक विनाशयथ, तस्माद्धन यद्यपहरथ तथाऽपि प्राणान् तावत्सर्वस्यापि लोकस्य रक्षतेति ६ । तदेव प्रदर्शिता सदृष्टान्ता षड् लेश्याः स्वरूपतोऽथ गुणस्थानलक्षणान् जीवसमासान् सूत्रकार एव तासु निरूपयन्नाह—

**किण्हा नीला काऊ अविरयसम्मंत संजयंतऽपरे। तेऊ पम्हा सण्णऽप्पमायसुक्का सजोगंता ॥ ७० ॥**

कृष्णा नीला कापोती चेत्याद्य लेश्यात्रय मिथ्यादृष्टेरारभ्याविरतसम्यग्दृष्टयन्त भवति न परत, इदमुक्त भवति-मिथ्यादृष्ट्याद्यविरतसम्यग्दृष्टयन्ता एव जीवा यथोक्तलेश्यात्रये वर्त्तन्ते न देशविरतादय., तेषा विशुद्धत्वात, लेश्याना चामूपामविशुद्धत्वादिति, **'संजयंतऽपरे'**त्ति 'अपरे' अन्ये पुनराहु -सयतान्तमिद लेश्यात्रय भवति, मिथ्यादृष्टेरारभ्य प्रमत्तसयतगुणस्थानपर्यन्ता जीवा एतस्मिन् कृष्णादिलेश्यात्रये वर्त्तन्ते न त्वप्रमत्तादय इति भाव, देशविरतप्रमत्तावस्थायामपि तथाविधविशुद्धेरभावादिद लेश्यात्रय ते प्रतिपद्यन्त इति हृदयं, **'तेऊपम्हा सण्णऽप्पमाय'**त्ति सञ्ज्ञिग्रहणेनात्र मिथ्यादृष्टि' सञ्ज्ञी गृह्यते, त मिथ्यादृष्टिसञ्ज्ञिपञ्चेन्द्रियमादौ कृत्वाऽकारस्यान्तर्ग- तस्येहादर्शनात् न विद्यते प्रमादो यत्रासौ अप्रमादः सयतस्तमन्त व्यवस्थाप्य तैजसी पद्मा च लेश्या प्राप्यते, इदमुक्त भवति-मिथ्यादृष्ट्यादिष्वप्रमत्तसयतान्तेषु सप्तसु गुणस्थानकेषु वर्त्तमानस्य सञ्ज्ञिनो जीवस्य तैजसीपद्मालक्षणमपि लेश्याद्वय . वर्त्तते, न त्वपूर्वकरणादिषु, तेषु शुक्ललेश्याया एवैकस्या सद्भावादिति, आह-ननु शास्त्रान्तरेषु पृथिव्यब्वनस्प- तीनामपि तैजसी लेश्या श्रूयतेऽत्र तु सञ्ज्ञिन एवासौ प्रोक्ता तत्कथ न विरोधः ? इति, अत्रोच्यत, इहानन्तरवक्ष्यमाणन्यायेन लेश्या द्विविधा भवन्ति-द्रव्यतो भावतश्च, तत्रेशानान्ताना देवाना याऽत्रैव द्रव्यतस्तेजसीलेश्या वक्ष्यते तद्युक्त एव कश्चिन्मिथ्यादृष्टिर्देवस्तेभ्यश्च्युत्वा पृथिव्यब्वनस्पतिपूत्पद्यते, तस्य च सा पूर्वभवसम्बन्धिनी तैजसी द्रव्यलेश्यैवेत्यत्र नाभिहिता, भावलेश्यानामेवेह गुणस्थानकेषु चिन्तयितुमभिप्रेतत्वात्, अथवा पृथिव्यादीनामपर्याप्तावस्थायामेवैषा भवति, न परतः, कृष्णाद्यशुभलेश्या- परावर्त्तनाद्, अतोऽल्पकालभावित्वेनेह नासौ निर्दिष्टेत्यविरोध इति, **'सुक्का सजोगंत'**त्ति मिथ्यादृष्टिमादौ कृत्वा सयोगिकेवलिपर्यन्ता शुक्ललेश्या प्राप्यते, मिथ्यादृष्ट्यादिषु सयोगिकेवलिपर्यन्तेषु त्रयोदशसु गुणस्थानकेषु शुक्ललेश्या लभ्यत इत्यर्थ, अयोगिनोऽलेश्यत्वादिति गाथार्थ ॥ ७० ॥ अथास्मिन्नेव लेश्याद्वारे प्रस्तुते पृथिव्यादिजीवाना मध्ये कस्य कियत्य काश्च लेश्या सभवन्तीतिशिष्योपयोगित्वान्निरूपयन्नाह—

**पुढविदगहरिय भवणे वण जोइसिया असंखनरतिरिया । सेसेगिंदियविगला तियलेसा भावलेसाए ॥ ७१ ॥**

**'पुढवी'**त्यादि, पृथिव्युदकवनस्पतयस्तथाऽसुरकुमारादयो भवनपतयो व्यन्तराश्च प्रत्येक कृष्णानीलाकापोतीतेजसीलेश्याचतुष्टययुक्ता भवन्तीतिशेष,

भिहिता ब्रह्मलोकेऽपि केषाञ्चिदमराणां शुक्ललेश्याऽपि प्रतिपादिता, यच्चात्र तत्त्वं तत्केवलिनो बहुश्रुता वा विदन्तीति, अन्ये पुनरेतां गाथामन्यथाऽपि व्याख्यानयन्ति, परं तद्व्याख्यानं प्रज्ञापनादिभिर्द्धं रविसंवादोत्युपेक्षितमिति गाथार्थः ॥ ३ ॥ इह भवनपत्यादीनां वैमानिकान्तानां देवानां नारकाणां च पूर्वं या कृष्णादिका लेश्या केषाञ्चित्काश्चिदेव प्रतिनियताः प्रोक्तास्ता द्रव्यलेश्या एव द्रष्टव्या, भावलेश्यास्तु प्रत्येकं सर्वेषां षडपि भवन्तीत्येतदिदानीं दर्शयितुमाह –'देवाणे'त्यादि,

**देवाण नारयाण य दव्वल्लेसा हवंति एयाउ । भावपरित्तीए उण नेरइयसुराण छल्लेसा ॥ ७४ ॥**

देवानां नारकाणां च 'एयाउ'त्ति या पूर्वं यथास्वं लेश्याः प्रोक्तास्ता एता द्रव्यलेश्या एव ज्ञातव्या भवन्तीत्यर्थः, भावस्य-लेश्याद्रव्योपष्टम्भितस्य चित्ताध्यवसायस्य पुनः परावृत्तौ-परावर्त्तने नारकसुराणां सर्वेषामपि प्रत्येकं षडपि लेश्या भवन्तीति ज्ञातव्यम्, इदमत्र हृदय-लेश्याशब्दः शुभाशुभे परिणामविशेषे व्याख्यातः, तस्य च परिणामविशेषस्य जनकानि सकलकर्म्मनिस्यन्दभूतानि द्रव्याणि जन्तूनां सदा सन्निहितानि सन्तीत्यपि पूर्वमेव सूचितं, तत्र कृष्णलेश्यापरिणामस्योत्पादकानि द्रव्याणि वर्णतोऽञ्जनपुञ्जादिसदृशकृष्णवर्णानि गन्धतो मृतगवादिशरीरगन्धादप्यनन्तगुणाशुभगन्धानि रसतः कटुकतुम्बकनिम्बरोहिणीरसादप्यनन्तगुणकटुकरसानि स्पर्शतः करपत्रस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, नीललेश्यापरिणामजनकानि तु वर्णतश्चासपिच्छवैडूर्यमणिसमानवर्णानि गन्धतः कृष्णलेश्याद्रव्यवदेव नवरं तस्मात्किञ्चिदसौ शुभतरो मन्तव्यः, रसतस्त्रिकटुकहस्तिपिप्पलीरसादप्यनन्तगुणतिक्तरसानि, स्पर्शतो गोजिह्वास्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, कापोतलेश्यापरिणामनिर्वर्त्तकानि तु वर्णतस्तैलकण्टककोकिलशरीरपारापतग्रीवादितुल्यवर्णानि गन्धतो नीललेश्याद्रव्यवदेव केवलं तस्मादयं मनाग्विशुद्धतरो मन्तव्यः, रसतस्तरुणाम्रफलतुवरकपित्थरसादप्यनन्तगुणाशुभरसानि स्पर्शतः शाकपत्रस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, तैजसलेश्यापरिणामसम्पादकानि तु वर्णतो हिङ्गुलप्रवालदिनकरशुकमुखदीपशिखासदृशवर्णानि गन्धतस्तु सुरभिकुसुममृद्यमानगन्धद्रव्यतुल्यसुरभिगन्धान्वितानि रसतः परिपक्वाम्रफलसुपक्वकपित्थरसादप्यनन्तगुणशुभरसानि स्पर्शतस्तु बूरनवनीतशिरीषकुसुमस्पर्शादप्यनन्तगुणकोमलस्पर्शानि भवन्ति, पद्मलेश्यानिर्वर्त्तकानि तु वर्णतश्चूर्णितहरिद्रासणकुसुमसदृशवर्णानि गन्धतस्तैजसलेश्यावदेव नवरं शुभतरोऽत्र वक्तव्यः रसतः सुसंस्कृतद्राक्षासरकादिभ्योऽप्यन-

नारकदेवानां द्रव्यलेश्यावस्थिति गा. ७४

॥ ६६ ॥

न्तगुणाशुभरसानि स्पर्शतस्तु तेजसलेश्यावद्रूक्षव्यो नवरं कोमलतमोऽत्र द्रष्टव्य, शुक्ललेश्याहेतुभूतानि तु द्रव्याणि वर्णतः शङ्खकुन्दक्षीरहारादिसमानवर्णानि गन्धतस्तैजसलेश्या-वदेव नवरं शुभतमोऽत्र द्रष्टव्य, रसतस्तु खर्जूरद्राक्षाक्षीरशर्करादिभ्योऽनन्तगुणशुभरसानि, स्पर्शतस्तु तैजसलेश्यावदेव नवरं कोमलतमोऽत्र वाच्य इति। एवं च सत्येतैः कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनोच्यन्ते, गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिद्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते, ततश्च कृष्णादिद्रव्याणि द्रव्यरूपा लेश्या द्रव्यलेश्या इति निर्दिश्यन्ते, ततो भवनपतिव्यन्तराणां याः कृष्णानीलाकापोतीतैजसीलक्षणाश्चतस्रो लेश्या उक्तास्ता द्रव्यलेश्या एव द्रष्टव्या, कस्यचिद्देवस्य जन्मत आरभ्य पर्यन्तं यावत्कृष्णलेश्याद्रव्याण्येवोदितानि प्राप्यन्ते कस्यचिन्नीललेश्याद्रव्याण्येव कस्यचित्कापोतलेश्याद्रव्याण्येव कस्यचि-दाजन्मत एवावसानं यावत्तैजसलेश्याद्रव्याण्येवोदयवन्ति लभ्यन्ते, ननु पद्मलेश्याशुक्ललेश्याद्रव्याणामवस्थितोदयः कथमपि तेष्वसम्भवः, एवं शेषदेवानां नारकाणां च मध्ये या यस्य पूर्वं लेश्या प्रोक्ता सा तस्य द्रव्यलेश्या द्रष्टव्या, तल्लेश्याद्रव्याणि तस्य देवस्य नारकस्य वा सर्वदैवानवस्थितोदयानि द्रष्टव्यानीति तात्पर्यं, भावमाश्रित्य पुनः सर्वेषां देवनारकाणां षडपि लेश्या भवन्तीति, आह-ननु भावाऽपि द्रव्यलेश्याजन्यत्वेनैव निर्दिष्टाः, यदि च द्रव्याणि तेषां षट्प्रकाराणि न सम्भवन्ति तर्हि भावाऽपि षट्प्रकाराः कथं स्यात्? कारणमन्तरेण कार्यस्य भवतो निर्हेतुकत्वप्रसङ्गात्?, सत्य, किन्त्ववस्थितोदयत्वमाश्रित्य यानि यस्योक्तानि द्रव्याणि तान्येव तस्य भवन्ति, कादाचित्कत्वेन तूदयेन भणितेभ्योऽन्यान्यपि तानि तेषामुदये प्राप्यन्त एव, तथाहि-सप्तमनरकपृथिव्यां सर्वदा कृष्णलेश्याद्रव्याण्यवस्थितोदयानि प्राप्यन्ते, कदाचित्तु सम्यक्त्वलाभादिकाले तैजस्यादिलेश्याद्रव्याण्यप्युदयमागच्छन्ति, ततस्ते सम्यक्त्वादिभाव प्रतिपद्यन्ते, अवश्यं चैतदङ्गीकर्त्तव्यमन्यथा सम्यक्त्वलाभस्तेषां समये यः प्रोक्तः स नोपपद्येत, अशु-भलेश्यापरिणामे तदसम्भवादिति, आह—यद्येवं तर्ह्यवस्थितागन्तुकलेश्याद्रव्यजन्यपरिणामद्वयस्यैककालं सद्भावः प्रसज्यते, न च युगपत्परस्परविरुद्धपरिणामसत्ता समयेऽभ्यु-पगम्यते, युक्त्या वा सङ्गच्छते, सत्य, यान्यागन्तुकलेश्याद्रव्याणि कदाचिदुदयमागच्छन्ति तैरवस्थितलेश्याद्रव्याणि प्रतिहतसामर्थ्यानि तथा क्रियन्ते यथा स्वजन्यं परिणा-मं जनयितुं न शक्नुवन्ति, ततश्चागन्तुकलेश्याद्रव्योदयकाले तज्जन्य एवैकः परिणाम संभवति, कुतः परिणामद्वयसद्भावः? इति, आह—यद्येवं तर्हि नारकदेवानां याऽवस्थिता

कृष्णादिलेश्या प्रोक्ता सा विरुध्यते, आगन्तुकलेश्याद्रव्योदयकाले तत्प्रतिघातात्, नेतदेव, आगन्तुकलेश्याद्रव्योदयकालेऽवस्थितलेश्याद्रव्याणि तदाकारमात्रमेव प्रतिपद्यन्ते न पुन सर्वथा स्वरूप परित्यज्य रूपान्तर प्रतिपद्यते येनावस्थितोदयत्व विरुध्यते, तदुक्त प्रज्ञापनाया—"से नूण भंते! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए नो तावन्नत्ताए नो तागंधत्ताए नो तारसत्ताए नो ताफासत्ताए भुज्जो भुज्जो परिणामइ?, हंता गोयमा! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए" इत्याद्यभ्युपगमतः सर्व प्रत्युच्चारणीय यावत्पर्यन्ते 'भुज्जो भुज्जो परिणमइ' त्ति हन्त गोतम! यथा त्व प्रतिपादयसि, अवस्थितोदया कृष्णलेश्या आगन्तुकनीललेश्याद्रव्योदये तद्रूपवर्णगन्धरसस्पर्शता न प्रतिपद्यत इत्यर्थ, एव भगवता निर्वचने प्रदत्ते पुनरपि गोतम पृच्छति—"से केणट्ठेण भंते! एव वुच्चइ किण्हलेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमइ" अत्र भगवान् कारणमाह—"आगारभावमायाए वा सिया पलिभागभावमायाए वा से सिया, किण्हलेसा ण सा नो खलु नीललेसा, तत्थ गया ओस्सक्कइ" त्ति, आकार —आगन्तुकनीलादिलेश्यासम्बन्ध्याभास, अत्यासन्ने जपाकुसुमादिके वस्तुनि दर्पणे तत्प्रतिच्छायावत्, आकार एव भाव —पदार्थ आकारभाव स एव तन्मात्र तेनाकारभावमात्रेणैवासाववस्थिता कृष्णलेश्या आगन्तुकनीललेश्यारूपा स्यात्न पुन सर्वथेत्यर्थ, तथा प्रतिरूपो भाग प्रतिभाग प्रतिबिम्बमित्यर्थ तस्मिन्नेव जपाकुसुमादिके वस्तुन्यत्यासन्ने दर्पणस्य कान्तत त्प्रतिबिम्बवत् प्रतिभाग एव प्रतिभागमात्र तेनैव चेयमवस्थितलेश्याऽऽगन्तुकलेश्यारूपा स्यात् न तु सर्वथेत्यर्थ, इदमुक्त भवति—प्रथमं मन्दतरे आगन्तुकलेश्योदयेऽवस्थितलेश्या तदाकारमात्रमेव प्रतिपद्यत, तत प्रकर्ष गच्छत्यागन्तुकलेश्योदये इतरा तत्प्रतिबिम्बमात्रमेव प्रतिपद्यते, विशिष्टतर तदाकार प्रतिपद्यत इत्यर्थ, सर्वथा तु निजस्वरूप परित्यज्य तद्रूपतामेव नासादयतीत्यत कृष्णलेश्यैव स्वरूपत सा,न तु नीललेश्या, केवल तत्र गतोत्सर्प्पति, किमुक्त भवति?—तत्रैव स्वकीयस्वरूपेऽवस्थिता नीलादिलेश्याऽन्तरं प्राप्य समुत्सर्पति, किञ्चित् शुभ तदाकारभावमात्र वा तत्प्रतिबिम्बमात्र वा प्रतिपद्यत इत्यर्थ, एव कृष्णलेश्याया कापोतलेश्यादिभिरप्यालापका वाच्या, तद्यथा —"से नूण भंते! किण्हलेसा काउलेसं पप्प"-त्यादि, तथा "तेउलेसा पम्हलेस सुक्कलेस पप्प," त्यादि, तदेवं कृष्णलेश्यामवस्थितोदयामाश्रित्योक्तं, यदा तु नीललेश्याऽवस्थितोदया भवति तदाऽवस्तन्या कृष्णलेश्यया सह उपरितनीभिश्च कापोतलेश्यातेजोलेश्यादिभि सहालापका वक्तव्या, यथा—"से नूणं भंते! नीललेसा कण्हलेसं पप्पे" त्यादि "नीललेसा काउलेसं तेउलेसं पम्हलेस

सुक्लेस'' मित्यादि, नवरं कृष्णलेश्यया सहालापके तत्र गता नीललेश्याऽवसर्प्पतीति वक्तव्य, आगन्तुककृष्णलेश्योदयेऽवस्थितनीललेश्याया अवसर्प्पणस्यैव घटनात्, एवं यथा
नीललेश्याऽवस्त्योपरितनलेश्याभि सह चारिता तथा कापोतीप्रभृतयोऽपि चारणीया, सर्वत्र चाधस्तनलेश्यया सहालापकेऽवसर्पतीति वाच्यम्, उपरितनलेश्यया उत्सर्पतीति
यावच्छुक्ललेश्या प्राप्यावसर्पतीत्येव वाच्य, तदुपरिलेश्याया एवाभावादित्यल प्रसङ्गेन, तस्मादागन्तुकलेश्योदये व्यवस्थितलेश्योदयो न विरुध्यते, सर्वथा तत्प्रतिघातस्योक्त-
न्यायेन निवारितत्वादिति स्थित, तदेव नारकदेवाना द्रव्यतो या यस्योक्ता लेश्या सैव तस्य भवति, भावलेश्यास्तु सर्वेषा सर्वा एव सभवन्तीति समर्थि
सप्तमपृथ्वीनारकादीना सम्यक्त्वलाभादिकाले तैजसलेश्यादिसभव, संगमकदेवादीना श्रीमन्महावीरोपसर्गकरणादिसमये कृष्णादिलेश्यासद्भावश्च निर्विवादो घटत एवेति गाथार्थः
।। ७४ ।। अवसित सप्रसङ्ग लेश्याद्वारमथ भव्यद्वारमुच्यते-तत्र मुक्तिपर्यायेण भविष्यन्तीति भव्या, य इदानीमद्यापि निर्वाण न प्राप्नुवन्ति आगामिनि तु काले निश्चयेन तत्प्रा-
प्स्यन्ति ते भव्या इत्यर्थः, तद्विपरीतास्त्वभव्या, अत एव भव्या भवसिद्धिका अप्युच्यन्ते, भवा—भाविनी सिद्धिर्येषा ते भवसिद्धिका इतिकृत्वा, तद्विपरीतास्त्वभवसिद्धिका,
इह च भव्याना भव्यत्वमनादिकालसिद्ध शाश्वतमेव न पुन सामग्र्यन्तरेण पश्चाद्भवत्यपगच्छति वा, अभव्यत्वमप्यभव्यानामित्थमेव द्रष्टव्य, एताभ्या च भव्यत्वाभव्यत्वाभ्या
सासारिको जीवराशि सर्वोऽपि सगृहीतो द्रष्टव्य, तत्र चाभव्या स्वल्पा भव्यास्तु तदनन्तगुणा बोद्धव्या, सिद्धानामनन्तभागवर्त्तित्वेनागमेऽभव्याना पठितत्वात्, भव्याना
तु सिद्धेभ्योऽनन्तगुणत्वेन तत्रैवाधीतत्वादिति, आह-ननु यदि भव्यत्वमभव्यत्व चानादिकालससिद्धमभ्युपगम्यते तदा वक्तव्य किमेतत्प्रत्यक्षगम्यमनुमानगम्य वा?, उच्यते,
केवलिना प्रत्यक्षगम्य व्यवहारिणा त्वनुमानाद्यवसेय, नन्वनुमानं लिङ्गात्प्रवर्त्तते, किं च तल्लिङ्गं येन व्यवहारिणो भव्यत्वमवगच्छेयु? इत्यत्राभिदध्महे—य ससारविपक्षभूत
मोक्ष मन्यते तदवाप्त्यभिलाष च सस्पृह वहति, किमह भव्योऽभव्यो वा?यदि भव्यस्तदा शोभनमथाभव्यस्तदा धिग्मामित्यादि चिन्ता च कदाचिदपि करोति स इत्यादिप्रका-
रा चिह्नेन ज्ञायते भव्य इति, यस्य तु कदाचिदपि नेयं चिन्ता समुत्पन्ना समुत्पद्यते समुत्पत्स्यते वा स ज्ञायतेऽभव्य इति वृद्धा व्याचक्षते, यत उक्तमाचाराटीका-
याम्—"अभव्यस्य हि भव्याभव्याशङ्काया अभावा" दित्यादि । तदेव निरूपिता स्वरूपतः सङ्क्षेपेण भव्या अभव्याश्च, अथ सूत्रकार स्वयमेव गुणस्थानलक्षणान् जी-

लेश्योत्सर्पणादि, भव्याभव्यस्वरूप च

मात्रस्य सर्वत्र तुल्यत्वात्, परमार्थचिन्तायां तु सम्यक्त्वस्योपघातकं दर्शनमोहनीयमेवेत्यत्र विस्तरेण, तेषां च मतिज्ञानावरणाद्युत्तरज्ञानावरणदर्शनमोहानां कर्म्मपरमाणुस्कन्ध-
रूपाणां स्पर्द्धकानि-रसप्रचयविशेषलक्षणानि 'द्विविधानि' द्विप्रकाराणि भवन्ति, कथमित्याह—'सर्वदेशोपघातीनि' सर्वं स्वावार्यं ज्ञानादिकं गुणमुपहन्तुं शीलं येषां तानि
सर्वोपघातीनि, तस्यैव स्वावार्यगुणस्य देशमुपहन्तुं शीलं येषां तानि देशोपघातीनि, आह-ननु स्पर्द्धकमिति तावत्किमुच्यते ? कश्चेह शब्दार्थः ?, उच्यते-इह तावत्प्रत्येक-
मनन्तैः परमाणुभिर्निष्पन्नाननन्तस्कन्धान् कर्म्मतया प्राणी प्रतिसमयमुपादत्ते, तत्र चैकैकस्कन्धे यः सर्वजघन्यरसः परमाणुस्तद्गतोऽपि रसः केवलिप्रज्ञया छिद्यमानः किल स-
र्वजीवेभ्योऽनन्तगुणान् भागान् प्रयच्छति, अपरस्तु परमाणुस्तानप्येकभागाधिकान् अन्यः पुनस्तानपि द्व्यधिकान् अपरस्तु तानपि त्र्यधिकानित्याद्येकोत्तरवृद्ध्या तावन्नेयं
यावदन्यः परमाणुर्मूलराशेरनन्तगुणानपि रसभागान् प्रयच्छति, एवं स्थिते विवक्षितकर्म्मस्कन्धे ये केचन जघन्यरसाः परमाणवस्तेषां समुदायः समानजातीयत्वादेका वर्गणेति
प्रतिपाद्यते, अन्येषां त्वेकेन रसभागेनाधिकानामणूनां समुदायो द्वितीया वर्गणा, अपरेषां तु रसभागद्वयवृद्धानां समूहस्तृतीया वर्गणा, अन्येषां रसभागत्रयाभ्यधिकानां
सङ्घातश्चतुर्थीवर्गणा, एवमनया दिशा एकैकरसभागाधिकानां परमाणूनां समुदायरूपा वर्गणाः सिद्धानामनन्तभागेऽभव्येभ्योऽनन्तगुणाः सम्प्राप्यन्ते, एतासां चैता-
वतीनां वर्गणानां समुदायः स्पर्द्धकमित्युच्यते, शब्दार्थस्त्वयं-स्पर्द्धत इवात्रोत्तरोत्तरसवृद्ध्या परमाणुवर्गणा इति स्पर्द्धकमिति, इत ऊर्ध्वमेकोत्तरया निरन्तरवृद्ध्या प्रवर्द्धमान-
रसयुक्ताः परमाणवो न लभ्यन्ते, किं तर्हि?, प्रथमस्पर्द्धकचरमवर्गणापरमाणुगतरसभागेभ्यः सर्वजीवानन्तगुणरसभागवृद्धेनैव रसेन समन्विताः परमाणवः प्राप्यन्त इत्यतो द्वितीयं
स्पर्द्धकमारभ्यते, अत्रापि च जघन्यरसानां परमाणूनामेका वर्गणा, तत एकेन रसभागेन वृद्धानां द्वितीया रसभागद्वयाधिकानां तृतीयेत्येवं तावन्नेयं यावत्पूर्वोक्तसङ्ख्योपेता
वर्गणा इति द्वितीयं स्पर्द्धकम्, अथ पुनरपि रसस्यैकोत्तरा वृद्धिर्न लभ्यते किन्तु सर्वजीवानन्तगुणरसभागाधिक एव रसः प्राप्यते, इतस्तेनैव क्रमेण तृतीयं स्पर्द्धकमारभ्यते,
पुनरनेनैव न्यायेन चतुर्थमित्यादि यावदनन्तानि रसस्पर्द्धकान्युत्तिष्ठन्ति, एतेषु च स्पर्द्धकेषु रसो द्विधा भवति-शुभोऽशुभश्च, तत्र शुभप्रकृतीनां सम्बन्धी शुभः, अशुभप्रकृतीनां तु
सम्बन्धी अशुभः, तत्र शुभो रसः सैरिभीक्षीरेय्यादिरसोपमो भवत्यतस्तद्दृष्टान्तादसौ भावनीयः, तथाहि-यथा महिषीक्षीरेक्ष्वादिरसः सहजोऽक्वथितो मधुरः एकस्थानिकव्यपदे-

शयोग्यो भवति, स एव च पश्चाज्जललवबिन्दुचुलुकार्द्धचुलुकप्रसृत्यञ्जलिकरककुम्भद्रोणादिसम्पर्कान्मन्दमन्दतरादिबहुभेदत्वं प्रतिपद्यते, एवं शुभप्रकृतीनामपि सम्बन्धी कश्चित्तथाविधः शुभो रस एकस्थानिक इत्युच्यते, स एव च स्वकारणभूताध्यवसायवैचित्र्यान्मन्दमन्दतरादिभेदमासादयति, तथा स एव क्षीरेक्ष्वादिरसः क्वथितोऽर्द्धावर्तितः सन् मधुरतरो यथा द्विस्थानिको भवति, स एव च जललवबिन्दुचुलुकार्द्धादिसम्बन्धान्मन्दमन्दतरादिभेदानङ्गीकरोति, एवं शुभप्रकृतिरसोऽपि कश्चित् शुभतरो द्विस्थानिक इत्युच्यते, स्वकारणवैचित्र्यान्मन्दमन्दतरादिभेदांश्च प्रतिपद्यते, तथा स एव क्षीरेक्ष्वादिरसः क्वथित्वा भागद्वये आवर्त्तिते तृतीये तु भागेऽवशेषिते सति मधुरतमो यथा त्रिस्थानिको जायते, स एव च जललवादिभेदान्मन्दमन्दतरादिभेदान् भजते, एवं शुभप्रकृतिरसोऽपि कश्चित् शुभतमस्त्रिस्थानिक इत्यभिधीयते, स्वकारणवैचित्र्यान्मन्दादिविचित्रताभाग् भवति, तथा स एव क्षीरेक्ष्वादिरसः क्वथित्वा भागत्रये आवर्तिते चतुर्थे तु भागे शेषत्वमानीतेऽतिशयमधुरतमो यथा चतुःस्थानिक इति व्यपदिश्यते, स एव यथोक्तमान-जलसंपर्काद्वैचित्र्यमाप्नोति, एवं शुभप्रकृतिरसोऽपि कश्चिदतिशुभतमश्चतुःस्थानिक इत्याख्यायते, स्वकारणवैसदृश्याच्च नैकरूपतामनुभवति, तदेवं कृता शुभप्रकृतिरसभावना। अशुभप्रकृतीनां तु सम्बन्धी अशुभो रसः कोशातकीपिचुमन्दादिरसोपमो भवतीति तद्दृष्टान्ताद्व्याख्यायते, तथाहि—यथा पटोलिकानिम्बादिरसः सहजोऽनावर्तितः भागद्वयावर्तो भागत्रयावर्तश्च यथासङ्ख्यं कटुः कटुतरः कटुतमोऽतिकटुकश्चेत्येकद्वित्रिचतुःस्थानिकव्यपदेशयोग्यो भवति, अयमपि च पूर्वोक्तजललवादिसम्बन्धात्पुनरपि वैचित्र्यमाप्नोति, एवमशुभप्रकृतिरसोऽपि यथासम्भवमेकद्वित्रिचतुःस्थानिक उच्यते, स्वकारणभेदात्प्रत्येकं बहुभेदश्च भवति, इह चाशुभो रसश्चतुःस्थानिकस्त्रिस्थानिकश्च सर्वोऽपि स्वावार्यगुणं सर्वमुपहन्तीतिकृत्वा सर्वघात्येव, द्विस्थानिकस्तु कश्चित्सर्वघाती कश्चित्तु देशघाती, एकस्थानिकस्तु सर्वोऽपि देशघात्येवेति, अत एवोक्तमिह ज्ञानावरणाद्यशुभकर्मणां सम्बन्धीनि स्पर्द्धकानि द्विविधानि—सर्वघातरसान्वितानि सर्वघातीनि, देशघातरसान्वितानि तु देशघातीनीति गाथार्थः ॥७६॥ ततः किम्? इत्याह—'सव्वेसु' इत्यादि,

रसस्थानप्ररूपणा सम्यक्त्वप्राप्तियोग्यता गा. ७७

**सव्वेसु सव्वघाइसु हएसु देसोवघाइयाणं च । भागेहिं मुच्चमाणो समए समए अणंतेहिं ॥ ७७ ॥**

सर्वेष्वपि सर्वघातिषु चतुःस्थानिकत्रिस्थानिकरसान्वितेषु तथा कियत्सु द्विस्थानिकरसान्वितेषु च स्पर्द्धकेषु हतेषु—विशुद्धाध्यवसायतोऽपवर्तनादिकरणया-

क्षयोपशमादि-स्वरूपम् गा० ७८

क्रमेण सर्वथोच्छेदितेषु सत्सु, देशोपघातिनामपि कियता द्विस्थानिकादिरसस्पर्द्धकाना प्रतिसमयमनन्ते भागे' क्षीयमाणो देशोपघातिस्पर्द्धकरसस्याप्येकस्मिन्ननन्ततमे भागेऽवतिष्ठमाने इत्यर्थ जीव सम्यक्त्वमवाप्नोति, नान्यथेति शेष इति गाथार्थः ॥ ७७ ॥ तदेव निर्दिष्टं सम्यक्त्वस्य लाभकारणं, तच्च सम्यक्त्वं त्रिधा भवति, तद्यथा—क्षयोपशमेन निर्वृत्तं क्षायोपशमिकं, उपशमेन निर्वृत्तमौपशमिक क्षयेण निष्पन्नं क्षायिकमिति, तत्र क्षयोपशमादीनामेव स्वरूपनिरूपणार्थमाह—

**खीणमुइण्णं सेसयमुवसंतं भण्णए खओवसमो । उदयविघाय उवसमो खओ य दंसणतिगाघाओ ॥ ७८ ॥**

मिथ्यात्व यदुदीर्णम्—उदयमागतमासीत् तत्सर्व यदा 'क्षीणम्' अपगत भवति, उदीर्णात्पुन 'शेषकम्' उद्धरितं यद्विवक्षितकालेऽद्याप्युदय नागच्छति केवल सत्तायामेव वर्तते तद् 'उपशान्त' विष्कम्भितोदय यदा भवति तदाऽयमीदृशो मिथ्यात्वमोहनीयस्योदीर्णस्य क्षीणत्वादनुदीर्णस्य तूपशान्तत्वात्क्षयोपशमो भण्यते, तेन क्षयोपशमेन निर्वृत्त क्षायोपशमिक सम्यक्त्व, मिथ्यात्वमोहनीये कर्म्मणि क्षयोपशमावस्थे जन्तव सम्यक्त्वं लभन्ते तत्क्षायोपशमिकसम्यक्त्वमुच्यत इत्यर्थ, एतच्च सूत्रेऽसदपि प्रक्रमायातत्वात्स्वयमेवावगन्तव्यम्, एवमुत्तरत्रापि, 'उदयविघाय उवसमो' त्ति उपशमनमुपशम, स क.? इत्याह—मिथ्यात्वमोहनीयस्य य उदयस्तस्य यो विघातो भवेत् स उपशम, उदयविघातश्चोपलक्षण, उदीर्णस्य मिथ्यात्वस्य क्षय इत्यपि द्रष्टव्य, उदीर्णेऽक्षीणे मिथ्यात्वस्योपशमायोगाद्, अत एव कस्याञ्चित्सूत्रपुस्तिकाया 'खओ य दंसणतिगाघाओ' इत्यस्य स्थाने 'जा समुइण्णस्स य विसुद्धी' इति पाठो दृश्यते, अत्रायमर्थ—अनुदितस्योदयविघात समुदीर्णस्य चोदयप्राप्तस्य या विशुद्धि—क्षय स उपशम, अत्र पाठे क्षयलक्षण सुगमत्वात्स्वयमभ्यूह्यमिति, ततश्चेदमुक्त भवति—उदयप्राप्तस्य मिथ्यात्वस्य क्षय शेषस्य त्वनुदीर्णस्य सत्तामात्रवर्त्तिनो य उदयविघात-उदयायोग्यत्वापादनलक्षण स उपशम, आह—यद्येवं क्षयोपशमस्याप्येवंस्वरूपस्यैव पूर्वं व्याख्यातत्वात्तस्योपशमेन सह भेदो न प्राप्नोति, सत्य, किन्तु क्षयोपशमावस्थे कर्मणि विपाकत एवोदयो नास्ति प्रदेशतस्त्वस्त्येव, उपशान्तावस्थे तु प्रदेशतोऽपि नास्त्युदय इत्येतावताऽनयोर्विशेष इत्यल



प्रसङ्गेन, तेनोपशमेन निर्वृत्तमौपशमिकं, सम्यक्त्वमिति स्वयमेव द्रष्टव्यं, इद च यथा लभ्यते यथा च मिथ्यात्वमोहनीयस्य कर्मणोऽन्तरकरणे वर्तमानस्य जीवस्यैतद्भवति

तथा ऽत्रैव ग्रन्थे सास्वादनगुणस्थानविचारे पूर्वं दर्शितमेव, क्षायोपशमिकस्यापि सम्यक्त्वस्य शुद्धसम्यक्त्वपुञ्जपुद्गलवेदनरूपस्य तत्रैव निर्णीतमनन्तव्यमिति, 'खइओ य दसणतिगघाओ' त्ति दर्शनशब्देन दर्शनमोहनीय कर्म्मात्र विवक्षित, तस्य त्रिक पूर्वोक्तस्वरूपं सम्यक्त्वमिश्रमिथ्यात्वपुञ्जत्रयलक्षण, तस्य यो घातो—विशुद्धाध्यवसायत सर्व्वथा दलिकनिर्लेपताकरणलक्षण स क्षय इहोच्यते, तेन क्षयेण निष्पन्नं क्षायिकं, सम्यक्त्वमभिधीयत इति स्वयमेवावसेयम्,, आह—नन्वन्यत्र दर्शनसप्तकक्षयेण क्षायिक सम्यक्त्वमुक्त अत्र तु दर्शनत्रिकक्षयात्तदुच्यत इति क न विरोध ?, सत्य,, किन्तु मुख्यत इदमेव दर्शनत्रिकं सम्यक्त्वस्यावारकमत एव तत्क्षयादेव क्षायिकं सम्यक्त्वं वक्तुमुचित, यत्तान्यत्र दर्शनसप्तकक्षयात्तदुच्यते तदनन्तानुबन्धिचतुष्टये ऽक्षपिते दर्शनत्रिक कदाचिदपि न क्षिप्यते, तदक्षपणे तु न क्षायिक सम्यक्त्वमत पारम्पर्येणानन्तानुबन्धिचतुष्टयक्षयाविनाभावित्वात्क्षायिकसम्यक्त्वस्य ते ऽप्यनन्तानुबन्धिनश्चत्वार क्रोधादयो दर्शनमोहत्वेन विवक्षिता, दर्शनसप्तकक्षयाच्च क्षायि सम्यक्त्वमित्यन्यत्रोक्तमित्यदोष,, परमार्थतस्तु यथोक्त दर्शनत्रिकमेव दर्शनमोह उच्यते, तत्क्षयानन्तरमेव क्षायिकसम्यक्त्वोपलब्धेरित्यलमतिविचिंतेन, क्वापि 'खइयं दंसणतिगघाओ' त्ति पाठस्तत्र दर्शनत्रिकघात क्षय इति शेषस्तेन क्षयेण निष्पन्नं क्षायिक सम्यक्त्व भवतीत्युपस्कार,, एवमन्यान्यपि पाठान्तराण्युक्तानुसारत प्रस्तुताविरोधतो व्याख्येयानीति गाथार्थ ॥ ७८ ॥ तदेवमुक्त स्वरूपत सम्यक्त्वमथात्र गुणस्थानलक्षणान् जीवसमासांश्चिन्तयन्नाह—

खइया अविरयसम्माइ सम्मदिट्ठीसु । उवसं तह सिद्धंता जहाकमसो ॥ ७६ ॥

इत्यादि, 'उवसम'त्ति औपशमिक सम्यक्त्व 'वे ' त्ति वेद्यते—अनुभूयते शुद्धसम्यक्त्वपुञ्जपुद्गला अस्मिन्निति वेदय—क्षायोपशमिक सम्यक्त्वमुच्यत, औपशमिकक्षायिकसम्यक्त्वयो पुद्गलवेदनस्य सर्वथैवाभावादिदमेव क्षायोपशमिकं सम्यक्त्व वेदकमभिधीयत इति भाव, अत एव क्षप्यमाणसम्यक्त्वपुञ्जपुद्गलचरमग्रासलक्षण यदन्यत्र वेदक सम्यक्त्वमुक्त तदिह ग्रन्थे पृथग् नोक्त, पुद्गलवेदनस्य समानत्वेन क्षायोपशमिकसम्यक्त्व एवान्तर्भावादिति, 'खइय' त्ति क्षायिक सम्यक्त्व, तदेतानि त्रीण्यपि सम्यक्त्वानि 'अविरयसम्माइ सम्मदिट्ठीसु' त्ति अविरतसम्यग्दृष्ट्यादिषु सम्यग्दृष्टिषु वर्त्तते, न तु मिथ्यादृष्टिसास्वादनमिश्रगुणस्थानकेष्वित्यर्थ, अ-

वैमानिकादिषु सम्यक्त्वं गा० ८०

विरतसम्यग्दृष्ट्यादयो अयोगिपर्यन्ता. सर्वे सम्यग्दृष्ट्य इति ते यथासम्भवमेतेषु सम्यक्त्वेषु प्राप्यन्ते, अधस्तनास्तु तयोऽसम्यग्दृष्टित्वादेव नैतेष्वन्यतरस्मिन्नपि वर्तन्ते इति तात्पर्यम्, अविरतसम्यग्दृष्ट्यादिषु च सर्वेष्वप्युपरितनगुणस्थानकेष्वेतानि त्रीण्यपि सम्यक्त्वानि समुदितानि न वर्तन्ते, किन्तु किमपि कियदपि गुणस्थानकं यावदिति दर्शयति—'**उवसंतमप्पमत्ते**' त्यादि,' सिद्धान्ता इत्यत्र योऽयमन्तशब्द स प्रत्येकमभिसंबध्यते, ततश्चौपशमिकं सम्यक्त्वमुपशान्तान्तं भवति, अविरतसम्यग्दृष्टिलक्षणं चतुर्थं गुणस्थानकमादौ कृत्वोपशान्तमोहस्वरूपमेकादशं गुणस्थानकं यावत्प्राप्यत इत्यर्थ, तत परं क्षीणमोहत्वेन क्षायिकसम्यक्त्वस्यैव भावादिति भावः, क्षायोपशमिकं तु सम्यक्त्वमप्रमत्तान्तं भवति, अविरतदेशविरतप्रमत्ताप्रमत्तेष्वेव प्राप्यते न परत इत्यर्थ, अपूर्वकरणादीनां हि दर्शनमोहस्य क्षीणत्वादुपशान्तत्वाद्वा क्षायिकमौपशमिकं वा सम्यक्त्वं भवति, न क्षायोपशमिकमिति भाव, क्षायिकं सम्यक्त्वं सिद्धान्तं भवति, अविरतसम्यग्दृष्ट्यादिष्वयोगिपर्यन्तेषु गुणस्थानेषु वर्तित्वात् सिद्धावस्थायामपि न निवर्तत इत्यर्थ, '**जहाकमसो**' त्ति उक्तान्वयेन 'यथाक्रमेण' यथा क्रमश एतद्वृत्तिर्भावनीया, 'न समुदितानां सर्वे ते त्य', अयमत्र परमार्थ—अविरतदेशविरतप्रमत्ताप्रमत्तान्तानां प्रस्तुतानि त्रीण्यपि सम्यक्त्वानि सम्भवन्ति, अपूर्वकरणानिवृत्तिबादरसूक्ष्म 'ग्र-२०००' सम्परायोपशान्तमोहास्तु क्षायिकसम्यग्दृष्टयो वा भवन्त्यौपशमिकसम्यग्दृष्टयो वा, न तु क्षायोपशमिकसम्यग्दृष्टय, क्षीणमोहसयोग्ययोगिकेवलिन सिद्धाश्च क्षायिकसम्यग्दृष्टय एवेति गाथार्थ ॥ ७९ ॥ अथैतान्येव त्रीणि सम्यक्त्वानि प्रसङ्गतो वैमानिकादिजीवेषु चिन्तयन्नाह—'**वेमाणी**' त्यादि,

**वेमाणिया य मणुया रयणाए असंखवासतिरिया य। तिविहा सम्मद्दिट्ठी वेयगउवसामगा सेसा ॥ ८० ॥**

वैमानिका मनुष्या '**रयणाए**' त्ति रत्नप्रभानारका इत्यर्थ असङ्ख्येयवर्षायुषस्तिर्यञ्चश्च '**तिविहा सम्मद्दिट्ठि**' त्ति त्रिविधा सम्यग्दृष्टयो भवन्ति, त्रीण्यपि प्रस्तुतसम्यक्त्वान्येषु सम्भवन्तीत्यर्थ, तथाहि—वैमानिकानां मध्ये योऽनादिमिथ्यादृष्टिर्देव प्रथमं सम्यक्त्वमवाप्नोति, तस्यान्तरकरणकाले प्रथममन्तर्मुहूर्त्तमौपशमिकं सम्यक्त्वं भवति, तच्च कथं किंस्वरूपं वा इत्यादत्रैव सास्वादनगुणस्थानविचारे निर्णीतमेव, औपशमिकसम्यक्त्वाच्चानन्तरं शुद्धसम्यक्त्वपुञ्जपुद्गलान् वेदयतस्तस्यापि

॥ ७५ ॥

सुरादिषु सम्यक्त्वं

क्षायोपशमिक सम्यक्त्वमवाप्यते, मनुष्यतिर्यग्भ्यो वा य क्षायोपशमिकसम्यग्दृष्टिर्वैमानिकेषूत्पद्यते तस्यैतत्पारभविक लभ्यते, यदा पुन. कश्चिन्मनुष्यो वैमानिकयोग्यमायुर्बन्ध विधाय पश्चात्क्षपकश्रेणिमारभते बद्धायुष्कत्वाच्च ता न समापयति, केवलं दर्शनसप्तक क्षपयित्वा क्षायिकं सम्यक्त्वमवाप्नोति, ततश्च मनुष्यायुस्त्रुटिसमये मृत्वा वैमानिकेषूत्पद्यते तदाऽनेन न्यायेन वैमानिकाना पारभविकं क्षायिक सम्यक्त्वमवाप्यते, न तु ताद्भविक , मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वादित्येव वैमानिकास्त्रिविधसम्यग्दृष्टय , मनुष्यास्तु द्विविधा —सङ्ख्येयवर्षायुषोऽसङ्ख्येयवर्षायुषश्च, तत्र सङ्ख्येयवर्षायुषा मनुष्याणामौपशमिकसम्यक्त्वमनन्तरोक्तन्यायेन प्रथमसम्यक्त्वलाभकाले भवत्युपशमश्रेण्या वा, तदनन्तरकालादिभावि तु क्षायोपशमिक तद्भविक, अथवा देवीदीना क्षायोपशमिकसम्यग्दृष्टीना मनुष्येषूत्पत्तौ पारभविक क्षायोपशमिक सम्यक्त्वमवाप्यते, क्षायिक तु क्षपकश्रेण्या ताद्भविक, नारकदेवाना क्षायिकसम्यग्दृष्टीना मनुष्येषूत्पत्तौ पारभविकं वा तदिति, असङ्ख्येयवर्षायुषा तु मनुष्याणामौपशमिकं वैमानिकवदेव भावनीय, क्षायोपशमिकं तु तदनन्तरकालादिभावि ताद्भविकं तथैव, तिर्यग्मनुष्यास्तु क्षायोपशमिकसम्यक्त्वयुक्ता वैमानिकेष्वेव जायन्ते नान्यत्र, ये तु मिथ्यादृष्टयस्तथाग्रा बद्धायुष्कत्वादेषूत्पद्यन्ते तेऽवश्य मरणसमये मिथ्यात्व गत्वैवोत्पद्यन्त इति पारभविक क्षायोपशमिकसम्यक्त्वममीषा न लभ्यत इति कार्म्मग्रन्थिका , सैद्धान्तिकास्तु मन्यन्ते—क्षायोपशमिकसम्यक्त्वसयुक्ता अपि बद्धायुषोऽमी केचिदेतेषूत्पद्यन्त इति पारभविकमपि क्षायोपशमिक सम्यक्त्वममीषा लभ्यते, क्षायिकं तु वैमानिकवदेव ज्ञात्व्यमिति, रत्नप्रभानारकाणा त्वौपशमिक क्षायिक च वैमानिकवदेव, क्षायोपशमिकं त्वसङ्ख्येयवर्षायुष्कमनुष्यवद्भावनीयमिति, असङ्ख्येयवर्षायुष्कतिरश्चा पुनस्त्रीण्यपि सम्यक्त्वान्यसङ्ख्येयवर्षायुष्कमनुष्यवद्व्याख्यानि, **'असंखवासनरतिरिया'** इति क्वचित्पाठ , स चासङ्गत एव, सङ्ख्येयवर्षायुषामसङ्ख्येयवर्षायुषा च मनुष्याणा 'मणुय'-त्यमनेनैव सामान्यपदेन पूर्वमुपात्तत्वादिति, **'वेयगमुवसामगा सेस'** त्ति भणितेभ्य शेषा भवनपतिव्यन्तरा ज्योतिष्का सङ्ख्येयवर्षायुष्कसञ्ज्ञिपञ्चेन्द्रियतिर्यञ्च शर्करप्रभाद्यधस्तनषट्पृथ्वीनारकाश्च **'वेयग'** त्ति क्षायोपशमिकसम्यग्दृष्टय. **'उवसामग'** त्ति औपशमिकसम्यग्दृष्टयश्च भवन्ति, क्षायिक हि सम्यक्त्वमेतेषु ताद्भविक तावन्न भवति ,सङ्ख्येयवर्षायुष्कमनुष्यस्यैव क्षायिकसम्यक्त्वारम्भकत्वादित्युक्तमेव, पारभविकमपि न भवति, क्षायिकसम्यग्दृष्टेरेतेष्वनुत्पत्ते , आह—ननु वासुदेवादीना क्षायिकस-

म्यग्दृष्टीनां तृतीयां नरकपृथ्वीं यावदुत्पत्तिरागमे श्रूयते तत्किमिति शर्कराप्रभावालुकाप्रभानारकाणामपि क्षायिकसम्यक्त्वं निषिध्यते?, सत्यं, किन्तु क्षायिकसम्यग्दृष्टय प्रायो रत्नप्रभामेव यावद्गच्छन्ति, परतस्तु स्वल्पा एव किञ्चिद्व्रजन्तीति स्वल्पत्वात्ते इह ग्रन्थे न विवक्षिता, अन्यतो वा कुतश्चित्कारणादिति केवलिनो बहुश्रुता वा विदन्तीति, एकद्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणां तु तद्भवं परभवं वाऽपेक्ष्य प्रस्तुतसम्यक्त्वमध्ये एकमपि न सम्भवतीति गाथार्थः ॥ ८० ॥ उक्तं च सप्रसङ्गं सम्यक्त्वद्वारं, साम्प्रतं सञ्ज्ञिद्वारमभिधीयते, तत्र सञ्ज्ञानं सञ्ज्ञा विज्ञप्तिरित्यर्थः, सा च त्रिधा—हेतुवादसञ्ज्ञा दीर्घकालिकसञ्ज्ञा दृष्टिवादसञ्ज्ञा चेति, तत्र हेतुः युक्तिनिष्ठं साध्यार्थगमको वचनविशेषो वदनं वादो हेतोर्वादो हेतुवादस्तेन सञ्ज्ञा हेतुवादसञ्ज्ञा, सा च द्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणां मन्तव्या, ते हि हेतुवादेनैव वक्तुं शक्यते सञ्ज्ञिन एते आतपादिभ्यश्छायाद्याश्रयणादाहारादिनिमित्तचेष्टायुक्तत्वाच्च मनुष्यादिवदिति हेतुवादेनैते सञ्ज्ञिनः, एतदपेक्षया तु निश्चेष्टाः पृथिव्यप्तेजोवायुवनस्पतयोऽसञ्ज्ञिनः, आह—ननु पृथिव्यादीनामप्याहारादिका दशविधा सञ्ज्ञा समये प्रोक्तैव तत्कथमेतेऽप्यसञ्ज्ञिनः?, सत्यं, किन्त्वतीवाव्यक्तत्वेन तुच्छत्वादाहारादीनामिष्टानिष्ठादिविशेषापरिज्ञानेनाशोभनत्वाच्च विद्यमाना अपि तेषां नेहासौ विवक्षिताऽतो न पृथिव्याद्येकेन्द्रियाणां सञ्ज्ञित्वं, न हि रूपकादितुच्छो धनीत्युच्यते, नाप्यशो[illegible]रूपो रूपवानिति व्यपदिश्यते, इत्येवमेकेन्द्रिया अपि स्तोकयाऽशोभनया च सञ्ज्ञया नेह सञ्ज्ञित्वेन प्रोक्ता इति भावः, दीर्घः—अतीतानागतवर्त्तमानरूपो यः कालो दिनपक्षमासादिस्तत्र भवा दीर्घकालिका सा चासौ सञ्ज्ञा च दीर्घकालिकसञ्ज्ञा—कृतमिदं करोमीदं करिष्यामीदं शोभनमेतदासीद्वर्त्तते भविष्यति वेत्यादिसुदीर्घकालत्रयगोचरविशिष्टमनोव्यापारवती न तु हेतुवादसञ्ज्ञेव प्रायःसाम्प्रतेक्षित्वमात्ररूपेति भावः, हेतुवादेन चेयं न साध्यते, अतिस्पष्टत्वेन बालानामपि सुप्रतीतत्वादिति हेतुवादसञ्ज्ञया सहास्य साङ्कर्यं न भावनीयं, इयं च मनोलब्धिसंपन्नानां नारकगर्भजतिर्यग्मनुष्यदेवानामेव बोद्धव्या, एते हि कालत्रयगोचरयुक्तायुक्तविचारचतुरत्वात्प्रस्तुतसञ्ज्ञया सञ्ज्ञिन उच्यन्ते, एतदपेक्षया तु मनोलब्धिशून्याः सर्वेऽप्यसञ्ज्ञिनः, दृष्टिः सम्यग्दृष्टिरिह गृह्यते तस्या वदनं वादो दृष्टिवादस्तेन सञ्ज्ञा दृष्टिवादसञ्ज्ञा—सम्यक्त्वविमलीकृतज्ञानरूपा न तु मिथ्यादृष्टिनारकादीनामिव मिथ्यात्वकलुषितबोधस्वरूपेति हृदयम्, एषाऽपि नारकगर्भजतिर्यग्मनुष्यदेवानामेव द्रष्टव्या, केवलं सम्यग्दृशां, न तु मिथ्यादृशां, अतस्ते सम्यक्त्वसद्भावविशुद्धज्ञानत्वात्प्रकृतसञ्ज्ञया सञ्ज्ञिनोऽभिधी-

यन्तो, एतदपत्वना तु मिथ्यादृष्टय नवं ऽप्यसञ्ज्ञिन, आह – नन्वेवं हेतुवादसञ्ज्ञादिभेदा त्रिविधेह सञ्ज्ञा प्रोक्ता भवति, सिद्धान्ते तु द्वीन्द्रियादीनामप्याहारसञ्ज्ञादिभेदादसो ञ्ज्ञिनोऽपि निर्दिष्टेति कथं न विरोधापत्तिः?, नैतदव, स्वामनन्त्याराहणादिरूपा सामान्यप्रवृत्ति कुर्वता लभ्यते ( ओघसंज्ञेति ) आहारादिदशविधसञ्ज्ञामध्ये सिद्धान्ते न तेषामसो प्रोक्ताऽत सेह चतुर्थी सञ्ज्ञा प्राप्नोति, तत्सम्बन्धाच्चैकेन्द्रियाणा मञ्ज्ञित्वमापद्यते, भवद्भिस्त्विह हेतुवादादिभेदात्त्रिस एव सञ्ज्ञा प्रोक्ता, एकेन्द्रियाश्च तत्प्रकारैरेवासञ्ज्ञित्वेन निर्दिष्टास्तत्कथमिदमवगन्तव्यम्?, सत्यमुक्त, किन्त्वव्यक्तभावत्वेन स्तोकाऽशोभना चैकेन्द्रियाणा सम्बन्धिनी ओघसञ्ज्ञाऽतोऽसौ नेह विवक्षितेति कुतस्तद्योगात्सञ्ज्ञाप्रसङ्गः?, यथा हि रूपकादिना स्तोकेन धनेन विद्यमानेनापि दरिद्रो धनीति नोच्यते, कुत्सितवपुर्युक्तोऽपि च रूपवानाभिधीयते, किं तर्हि? प्रचुरधनवानेव धनी विशिष्टरूपयुक्त एव च रूपवानिति लोके व्यपदिश्यते, एवमेकेन्द्रिया अप्यनया स्तोकयाऽशोभनया चौघसञ्ज्ञया सञ्ज्ञिना नाभिधीयन्त इत्यमीषा सर्वप्रकारैरसञ्ज्ञित्वमिहोच्यमान न किञ्चिद्विरुद्धमिति, यद्येवमाहारभयपरिग्रहादिसञ्ज्ञा अन्यत्र या प्रोक्तास्तासामिह सङ्ग्रहो न प्राप्नोतीति मेव, एतास्वेव तिसृषु सञ्ज्ञासु तत्सङ्ग्रहरूपत्वेन सामान्यस्वरूपत्वतद्विशेषभूतानामव तासामन्तर्भावादित्यलमतिबहुविस्तरेण कार्यमेवाभिदध्म, तत्र तासु तिसृषु सञ्ज्ञासु मध्येऽस्पष्टा हेतुवादसञ्ज्ञा ततः स्पष्टतरा दीर्घकालिकी ततोऽपि सम्यग्ज्ञानहेतुत्वेन स्पष्टतमा दृष्टिवादसञ्ज्ञा, सिद्धान्ते पुनर्यत्र क्वचित्सञ्ज्ञासञ्ज्ञिव्यवहारः स निःशेषोऽपि प्रायो दीर्घकालिकीं सञ्ज्ञामाश्रित्य प्रतिपत्तव्योऽतोऽत्रापि मनोलब्धिसम्पन्नः पञ्चेन्द्रियः सर्वोऽपि सञ्ज्ञी, तल्लब्धिशून्यस्तु पर्युदासाश्रयणात्स एवासञ्ज्ञीत्यधिकृतं वेदितव्यमिति ॥ तदेवं निर्दिष्टौ स्वरूपेण सञ्ज्ञ्यसञ्ज्ञिनौ, एतयोश्च गुणस्थानलक्षणान् जीवसमासान्निरूपयितुमाह स्वयमेव सूत्रकार —

**अस्सणि अमणपंचिंदियंत सण्णी उ समण छउमत्था । नोसण्णि नो असण्णी केवलनाणी उ विण्णेओ ॥ ८१॥**

'अस्सण्णि' त्ति लुप्तविभक्तिको निर्देशः, यथासम्भवमेवमन्यत्रापि, ततश्चासञ्ज्ञिषु मनोलब्धिरहितसम्मूर्च्छजपञ्चेन्द्रियेषु प्राप्यते, के? इत्याह— 'अमणपंचिंदियंत' त्ति अमनस्को मनोलब्धिरहितः पञ्चेन्द्रियो वृत्तिमाश्रित्यान्ते येषा तेऽमनस्कपञ्चेन्द्रियान्ता मिथ्यादृष्टिसास्वादनलक्षणा जीवसमासा, एषामेवैकेन्द्रि-

आहारकानाहारका. गा० ८१

कदाचिदप्युक्ते, तदिदमत्र हृदयम्—एकद्वित्रिचतुरिन्द्रियामन
यादिष्वमनस्कपञ्चेन्द्रियान्तेषु जीवेषु वृत्ते, न तु मिश्राविरतसम्यग्दृष्ट्यादयस्तेषामेकेन्द्रियाद्यमनस्कपञ्चेन्द्रियान्तेषु माऽस्वादनाऽपि स्कपञ्चेन्द्रियलक्षणेषु जीवेषु ये वर्त्तन्ते मिथ्यादृष्टिसास्वादनलक्षणा जीवास्त एवासञ्ज्ञिषु प्राप्यन्ते न मिश्राविरतादयोऽसञ्ज्ञिना तथाविशुद्धेरभावात् पूर्वभवादायातोऽपर्याप्तावस्थायामेवासञ्ज्ञिषु प्राप्यते, परतो मिथ्यात्वगमनादिति भावनीय, 'सन्नी उ' 'तु' पुनरर्थे लुप्तसप्तमीबहुवचनत्वान्मनोलब्धियुक्त सञ्ज्ञिपञ्चन्द्रियलक्षणेषु सञ्ज्ञिषु पुनर्वर्त्तते, के ? इत्याह—'समणछउमत्थ' त्ति छादयति-आवृणोति केवलज्ञानादीति छद्म ज्ञानावरणादिकर्म्म तत्र तिष्ठन्तीति छद्मस्था-क्षीणमोहप- र्यन्तगुणस्थानवर्तिनो जीवास्ते चैकद्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रिया अमनस्का अपि भवन्त्यतस्तद्व्यवच्छेदार्थमाह समनस्का, ततश्चेदमुक्तं भवति समनस्का सन्तो ये केचन छद्मस्थास्ते सर्वेऽपि सञ्ज्ञिषु वर्त्तन्ते, ते च मिथ्यादृष्ट्यादिक्षीणमोहपर्यन्ता द्वादशगुणस्थानवर्त्तिनो जीवा मन्तव्या, मिथ्यादृष्टिसास्वादना समनस्का अमनस्काश्च भवन्त्य- तस्तेषा वृत्तिर्यथासम्भवं सञ्ज्ञिष्वसञ्ज्ञिषु च द्रष्टव्या, मिश्राविरतादयस्तु समनस्का एव भवन्त्यतोऽमीषा सञ्ज्ञिष्वेव वृत्तिरितीह तात्पर्य, सयोग्ययोगिकेवलिनस्तर्हि का वार्त्ता? इत्याह—'नोसन्नी'त्यादि, उभयरूपोऽपि केवली न सञ्ज्ञिषु वर्त्तते नाप्यसञ्ज्ञिषु, यतोऽसौ सञ्ज्ञी तावन्न भवति, तथाहि—मनोव्यापारपूर्वकातीतार्थस्मरणानागतार्थचि- न्तायालिङ्गितदीर्घकालिकमतिश्रुतविमर्शात्मिका सञ्ज्ञेह प्रकृता, सा च भगवत केवलिनो न सभवति, निःशेषवरणक्षयोत्पन्नकेवलज्ञानमाहात्म्यप्रतिसमयावभासितसमस्तवस्तु- स्तोमत्वेन मनोविकल्पस्मरणचिन्तामतिश्रुतव्यापारातीतत्वाद्, अतः सञ्ज्ञातीतत्वान्न सञ्ज्ञिव्यपदेशभाज केवलिन, तदुक्त—"सन्ना सरणमणागयचिन्ता य न सा जिणेसु सभवइ । मइवावारविमुक्का सन्नाईया इमे तम्हा ॥ १ ॥" इति, असञ्ज्ञिव्यपदेश यथा नार्हन्ति तथा प्रतीतमेव, तद्व्यपदेशस्य मनोलब्धिशून्येषु सम्मूर्छजपञ्चेन्द्रियेष्वेव निवेशनात्, केवलिना तु तल्लब्धिसम्पन्नत्वाद, अत सयोग्ययोगिकेवली न सञ्ज्ञी नाप्यसञ्ज्ञीति विज्ञेय, किन्तु राश्यन्तरमेवेति स्थितमिति गाथार्थ ॥ ८१ ॥ उक्तं सञ्ज्ञि- द्वारमथाहारकानाहारकद्वारमभिधानीय, तत्र के आहारका के चानाहारका ? इत्येतदेव तावन्निरूपयन्नाह—

**विग्गहगइमावन्ना केवलिणो समुहया अजोगी य । सिद्धा य अणाहारा सेसा आहारगा जीवा ॥ ८२ ॥**

इह भवान्तरप्रस्थितजीवस्य ऋजुश्रेण्यपेक्षयाऽन्यस्या विशिष्टाया वक्राया श्रेणेर्ग्रहण—स्वीकरण विग्रहो, वक्रश्रेण्यारम्भरूप वक्रितमित्यर्थ, तेन विग्रहेण परित्यक्तपूर्वशरीरस्य जन्तोर्भवान्तरोत्पत्तिस्थानाभिमुख गमन गतिर्विग्रहगतिस्तामापन्ना —प्राप्ता जन्तवोऽनाहारका इति सर्व्वत्र सबध्यते, तथा समवहता —समुद्घातवर्तिनो यथासम्भव सयोगिकेवलिन. अयोगिकेवलिनश्च सिद्धाश्चैते सर्वेऽप्यनाहारका, तथाहि —यदा जीवस्य मरणस्थानादग्रेतनभवोत्पत्तिस्थानमुपर्यधस्तिर्यग्वा समश्रेण्या प्राञ्जलमेव भवति तदाऽयमेकेनैव समयेन तदवाप्नोति, ऋजुगतिश्चेयमुच्यते, आहारकश्चास्या नियमाद् भवति, परित्याज्योपादेयशरीरमोक्षग्रहणसंस्पर्शभावेनाहरणीयपुद्गलाना व्यवच्छेदाभावादिति, यदा तु मरणस्थानादुत्पत्तिस्थानं किञ्चिद्वक्र भवति यथैशानकोणोपरिभागादाग्नेयकोणाधस्तनभाग तदा प्रथमसमये ईशानकोणोपरिभागादाग्नेयकोणोपरिभागं गत्वा तदधस्तनभागलक्षणस्योत्पत्तिस्थानस्य समश्रेणीं प्रतिपद्यते, जीवपुद्गलानामनुश्रेणिगमनात्प्रथमसमय एवोत्पत्तिस्थानप्राप्ते:, ततो द्वितीयसमये वक्रश्रेण्यन्तरारम्भरूप विग्रह विधाय तत्रोत्पत्तिस्थाने प्राणी समुत्पद्यत इति, इय च विग्रहगतिरुच्यते, एकेन वक्रश्रेण्यन्तरारम्भरूपेण विग्रहेणोपलक्षिता गतिर्विग्रहगतिरितिकृत्वा, अस्या चैकविग्रहाया द्विसमयायां विग्रहगतौ आद्यसमये पूर्वशरीरस्य मुक्तत्वादग्रेतनस्य त्वद्याप्यप्राप्तत्वादनाहारक इति प्रज्ञप्त्याद्यागमानुसारिभिरभ्युपगम्यते, [पुस्तकान्तरे 'परभवपढमे साडा' इति वचनात् मुच्यमान हि पूर्वशरीरमस्मिन्नाद्यसमये मुक्तमसारीभूतमित्यनाहारकोऽयमत्र क्रियाकालनिष्ठाकालयोरभेदवादिनिश्चयनयमतस्यैतैराश्रयणादिति भाव,] तत्त्वार्थटीकाद्यनुसारिणस्तु मन्यन्ते—अत्राद्यसमयेऽप्यनाहारकोऽसौ न भवति, पूर्वशरीरस्य तत्र मुच्यमान न मुक्तसद्भावापन्नमत एवायं पूर्वभवचरमसमय एव न तु परभवप्रथमसमय, पूर्व्वशरीरस्याद्यापि सद्भावात्, तत्सद्भावे च न विद्यते आहारोऽस्येत्यनाहारक इति वक्तुमशक्यमेवेत्यनाहारकोऽयमिह न भवति, क्रियाकालनिष्ठाकालयोर्भेदवादिव्यवहारनयमतस्यैतैराश्रयणादितिहृदयम्, इद च मतद्वयमप्यत्र कथञ्चित्प्रमाणमुभयनयमतात्मकत्वात् जिनमतस्येति, द्वितीयसमये तूत्पत्तिस्थानप्राप्तेराहारक एवेत्यत्राविवाद इति, यदा पुनर्मरणस्थानादुत्पत्तिस्थान वक्रतर भवति यथा तस्मादेवैशानकोणोपरिभागान्नैर्ऋतकोणाधस्तनप्रदेशस्तदा प्रथमसमये वायव्यकोणोपरिभागं गच्छति, ततो द्वितीयसमये विग्रहेण नैर्ऋतकोणोपरिभागमागच्छति, तृतीयसमये विग्रहेणैव तदधस्तनभागस्वरूपमुत्पत्तिस्थानमवाप्नोति, तदेव विग्रहद्वयोपेता त्रिसमया विग्रहगतिरिय भाविता, न चैते त्रय समया अनेनैव प्रकारेण संभवन्तीति प्रतिपत्तव्यं, किन्तूक्ता-

॥ ८० ॥

किये आहार केऽत्रे

गुसारेण सुधियाऽन्यथाऽपि भावनीया, उपलक्षणमात्रत्वादस्य, एवं पूर्वमुत्तरतापि च, इहापि पूर्वोक्तयुक्तिवशादाद्यसमयद्वयेऽनाहारकस्तृतीयसमये त्वाहारक इति निश्चयनयवादिनो मन्यन्ते, व्यवहारनयवादिनस्तु प्रागुक्तयुक्तेरेवैकस्मिन्नेव मध्यमे विग्रहसमयेऽनाहारको न तु प्रथमचरमसमययोरिति प्रतिपद्यन्ते, तदेवं सर्वजीवाना भवान्तरप्रतिपत्तौ ऋजुगतिर्यथोक्तस्वरूपा द्विसमया त्रिसमया च विग्रहगतिरित्येतदेव गतित्रय सम्भवति, अथैकेन्द्रियाणामेव विग्रहत्रयोपेता चतुःसमया विग्रहगतिर्यासम्भवति तद्भावना प्रतिपाद्यते—इह त्रसनाड्या बहिर्विदिग्व्यवस्थितस्य सतो यस्य निगोदादेरधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिशि भवति सोऽवश्यमेकेन समयेन विदिशो दिशमागच्छति द्वितीयेन नाडीं विशति तृतीयेनोर्ध्वलोकं व्रजति चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थाने उत्पद्यते, तदेव त्रिविग्रहा चतुःसमया विग्रहगतिरियम्, अत्रापि पूर्ववदेकीयमतेनाद्येषु त्रिषु समयेष्वनाहारकश्चतुर्थे त्वाहारक, अन्यदीयमतेन तु मध्यमे वक्रसमयद्वय एवानाहारको न त्वाद्यन्त्यसमययो., तदित्थमागमे जन्तूनां भवान्तरगतिरियमेव चतुर्विधा प्रोक्ता—ऋजुगतिरेकविग्रहाद्विविग्रहा त्रिविग्रहा चेति, अन्ये त्वाहुश्चतुर्वक्रोपेता पञ्चसामायिकी अन्याऽप्यत्र गतिः सम्भवति, यदा त्रसनाडीबहिर्विदिशस्तद्बहिर्विदिश्येवोत्पद्यत इति, अत्र च समयत्रयं पूर्ववदेव, चतुर्थसमये तु नाडीतो निर्गत्योत्पत्तिस्थानस्य समश्रेणि प्रतिपद्यते, पञ्चमे तु नाडीबहिर्विदिग्लक्षणमुत्पत्तिस्थानमवाप्नोति, अत्राप्येकेषामाद्यसमयचतुष्टयेऽनाहारक पञ्चमे त्वाहारक, अन्येषां तु मध्यमे वक्रसमयत्रय एवानाहारको न तु प्रथमचरमसमययो, उक्तञ्च—'एकं द्वौ वाऽनाहारकः' ( तत्त्वार्थ अ० २--सू० ३१ ) वा शब्दात्कदाचित्त्रीन्वेति द्रष्टव्यम्, भाष्यकराभिप्रायेण वाशब्दस्य एकस्य द्वयोश्च विकल्पार्थतयाऽन्वयन, अधिकस्य स्पष्टं तत्र निषेधात, इयं च पञ्चसामयिकी गति कादाचित्कात्वादागमे नोक्ता, प्रायेणैकेन्द्रियाणामपीत्थमनुत्पत्तेरिति । तदेव दर्शिता विग्रहगत्यापन्ना अनाहारकाः, इह च विग्रहगत्यापन्ना एवानाहारका इति नावधारणीयं,सिद्धादीनामप्यनाहारकत्वाद् विग्रहगतावनाहारका एवेतीत्थमपि नावधार्यते, तस्यामपि केषुचित्समयेष्वनाहारकत्वस्यानुक्तत्वात, तर्हि सर्वाणि वाक्यानि सावधारणानि भवन्तीति कथं नेतव्यमिति, उच्यते, क्रियतेऽवधारणं केवलं सम्भवदर्शनपरमयोगव्यवच्छेदेन विग्रहगतावनाहारकाः सम्भवन्त्येवेति; यथा नभसि पक्षी जाले मत्स्य इत्यादिष्वित्यलं विस्तरेण, तथा सयोगिनः केवलिनोऽपि समवहता —समुद्घाते वर्तमानास्तृतीयचतुर्थपञ्चमसमयेषु केवलकार्मणकाययोगावस्थायामनाहारका , एतच्चेहापि प्राक् किञ्चित्सविस्तरं प्रोक्तमेवेति, अयोगिकेवलिन

ओजआहारादिभेदा

सिद्धाश्च पुनः सर्वथैवानाहारका, आहारग्रहणकारणौदारिकादिशरीरचतुर्वेदनीयकर्मादिस्तेष्वभावादिति, उक्तशेषाः पुनः सर्वेऽपि जीवा आहारका एव ओजाहारलोमाहारप्रक्षेपाहारान्यतराहारग्रहणकारणसद्भावेन यथासम्भवमाहारयन्त्येवेति कृत्वा,, तत्रौजसा तैजसशरीरेण स्वसहचारिकार्म्मणशरीरान्वितेनाहारः सकारवर्णलोपादोजाहार, अथवा ओजः-स्वजन्मस्थानोचितशुक्रानुविद्धशोणितादिपुद्गलसंघातस्तस्याहारः ओजाहारः, अयं चापर्याप्तावस्थायामेवान्तर्मुहूर्तं सर्व्वजन्तूनां द्रष्टव्यः, तथा लोमभिः लोमरन्ध्रैः शिशिरप्रावृट्कालादिभाविना शीतजलादिपुद्गलानामाहरणं—ग्रहणं लोमाहारः, अयं च पर्याप्त्युत्तरकालमाभवक्षयात्समस्तजीवानामवसेयः, तथा प्रक्षेपणं मुखे प्रवेशनं प्रक्षेपस्तेनौदनादेराहारः प्रक्षेपाहारः, अथवा प्रक्षिप्यत इति प्रक्षेपः—ओदनकवलादिस्तस्याहारः प्रक्षेपाहारः, अयं च विकलेन्द्रियपञ्चेन्द्रियतिर्यङ्मनुष्याणामेव द्रष्टव्यः, तेषामपि कादाचित्को न त्वविरहितः, उक्तञ्च— "ओयाहारा जीवा सव्वे पज्जत्तया मुणेयव्वा। पज्जत्तया य लोमे पक्खेवे होंति भइयव्वा ॥ १ ॥ एगिंदियदेवाणं नेरइयाणं च नत्थि पक्खेवो ॥ सेसाणं जीवाणं ससारत्थाणं पक्खेवो ॥ २ ॥" इत्यादि, आह—ननु मनश्चिन्तितोपनतस्वरूपश्चतुर्थोऽप्याहारो भवनपत्यादीनां संभवति स कस्मादिह नोक्तः, सत्यं, किन्तु करादिनाऽप्रक्षिप्ता एवागन्तुकाः पुद्गला अत्राहारतया परिणमन्ति लोमाहारेऽप्ययमेवमेवेत्येतावत्साम्याल्लोमाहारेऽन्तर्भावितत्वात्पृथगसावागमेऽपि नोक्त इत्यदोषः, तस्माद्विग्रहगत्यापन्नादिभ्यः शेषाः सर्व्वेऽपि जीवा यथोक्तस्वरूपं त्रिविधमाहारं यथासम्भवमाहारयन्त्येवेत्याहारका एवेति गाथार्थः ॥ ८२ ॥ तदेवमाहारका अनाहारकाश्च जीवाः स्वरूपतो निर्दिष्टाः, अथ गुणस्थानलक्षणा जीवसमासास्तेषु चिन्तनीयाः, ते च सुगमत्वादिकारणात् कुतश्चित्सूत्रकृता न चिन्तिता इति मुग्धमतिविनेयानुग्रहार्थं वयमेव चिन्तयामः, तत्रानाहारकेषु मिथ्यादृष्टिसास्वादनाविरतसम्यग्दृष्ट्योऽयोगिकेवलिनः समुद्घाते तृतीयचतुर्थपञ्चमसमयवर्त्तिनः सयोगिकेवलिनश्च वर्तन्ते, न शेषाः तथाहि-अयोगिकेवलिनं तृतीयचतुर्थपञ्चमसमयवर्त्तिसयोगिकेवलिनं च विहायान्ये संसारिणो जीवाः सर्वेऽपि विग्रहगतावेवानाहारकाः सम्भवन्ति नान्यत्र, सा च पूर्वभवात्कालं कृत्वा भवान्तरप्रस्थितानामेव भवति, सम्यग्मिथ्यादृष्टिश्च तावत्कालमेव न करोति 'न सम्मामिच्छो कुणइ कालं' मिति वचनादतोऽस्य कुतो विग्रहगतिसम्भवः?, तदसम्भवे च कथमनाहारकत्वमिति, देशविरतादिक्षीणमोहान्तगुणस्थानवर्त्तिनो जीवा विग्रहगतौ न संभवन्त्येव, भवान्तराले देशविरत्याद्युचितपरिणामस्यैवागमे निषिद्धत्वादिति कृत एषा-

मप्यनाहारकत्व, समुद्घाततृतीयचतुर्थपञ्चमसमयवर्जसयोगिकेवलिनोऽप्येतन्न संभवति, विग्रहगतेरस्याभावादिति, ये चैते सम्यग्मिथ्यादृष्टिदेशविरत्यादिसमुद्घातसमयत्रयवर्जसयोगिकेवलिपर्यन्ता जीवा विग्रहगतेरन्यत्र मिथ्यादृष्टिसास्वादनाविरताः ते चोक्तयुक्तिवशादनाहारकेभ्यो व्यावृत्तास्ते आहारकेषु वर्तन्त इति सामर्थ्यादिवोक्तं भवति, तदेवमुक्तमाहारकद्वार, तद्भणने च चिन्तिता गत्यादिष्वाहारकपर्यन्तेषु द्वारेषु चतुर्द्दशगुणस्थानलक्षणा जीवसमासा, तच्चिन्तने चावसितं 'संतपयपरूवणया दव्वपमाणं चे'त्यादिगाथोपन्यस्तं प्रथमं सत्पदप्ररूपणाद्वारम्, अथ द्वितीयं द्रव्यप्रमाणद्वारं प्रस्तुतमपि तावन्नोच्यते, यतोऽत्रान्तरे आह कश्चित्—ननु चिन्तिता भवद्भिर्गत्यादिद्वारेषु गुणस्थानलक्षणा जीवसमासाः परं येन केनचित्सर्वसाधारणलक्षणेनाजीवेभ्यो व्यावृत्ता जीवा भण्यन्ते तदेव तावदद्यापीह न किञ्चिदभिहित, ततस्तदपरिज्ञाने जीवा एवाजीवविलक्षणा कथं ज्ञातव्या ? इत्याशङ्क्य सर्वजीवाना साधारणमुपयोगरूप लक्षणमाह—

**नाणं पंचविहंपिय अण्णाणतिगं च सव्व सागारं । चउदंसणमणगारं सव्वे तल्लक्खणा जीवा ॥ ८३ ॥**

इहोपयोजनमुपयोग अर्थोपलम्भ, अथवोपयुज्यते-अर्थग्रहणपरिणामेन परिणमति जीवोऽनेनास्मादस्मिन् वेत्युपयोग, अविशेषित सामान्येन बोध इत्यर्थः, स च विशेषजिज्ञासाया द्विधा भवति-साकारोऽनाकारश्च, तत्र सहग्राह्यार्थसम्बन्धिनाऽऽकारेण वर्तत इति साकार., न विद्यते ग्राह्यार्थसम्बन्धी आकारो यत्रासौ अनाकार, तत्र साकारोपयोगोऽष्टधा, कथमित्याह—'**नाणं पंचविह**'मित्यादि, ज्ञायते विशेषाकारेण वस्तु परिच्छिद्यतेऽनेनेति ज्ञानम्-आभिनिबोधिकश्रुतावधिमनःपर्यायकेवलज्ञानलक्षणम्, एतत्पञ्चप्रकारमपि तथा मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणमज्ञानत्रिकं च '**सव्व सागार**'ति सर्वमेतत्साकारं, साकारोपयोग इत्यर्थ, अनाकारोपयोगस्तु चतुर्द्धा, कथमित्याह '**चउदंसण**'मिति चक्षुषा दर्शनं-वस्तुन सामान्याकारेण पर्यालोचनं चक्षुर्दर्शनम्, अचक्षुषा-चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा च दर्शन अर्थस्य सामान्याकारेण ग्रहणमचक्षुर्दर्शनम्, अवधिना अवधिरेव वा दर्शनमवधिदर्शनं, केवलं-असहायं चक्षुर्द्दर्शनाद्यसहचरितं दर्शनं केवलदर्शनम्, एतद्दर्शनचतुष्टयम् 'अणगार'ति न विद्यते आकारो यत्र तदनाकारम्, अनाकारोपयोग इति तात्पर्यम्, आह—ननु मानुष मानुषमित्यादि सामान्याकारेण गृह्यमाणे वस्तुनि दर्शनमिष्यते, तस्मिन्नेव स्त्री-

पुरुषदेवदत्तयज्ञदत्तादिनाऽऽकारविशेषेण परिच्छिद्यमाने ज्ञानमभिधीयते अतो दर्शनोपयोगेऽपि सामान्योऽर्थाकार समस्त्येवेति कथमनाकारता तत्र ?, उच्यते सत्य,, किन्तु स्वल्पमुदरे गर्भाधिष्ठिते विशिष्टोदरस्याभावादनुदरा कन्या सत्यपि च रूपादिके स्वल्पधने विशिष्टप्रचुरतरधनस्यासत्वादधनो देवदत्त इत्यादि यथा लोके व्यपदिश्यते एवमत्रापि दर्शनोपयोगस्य सत्यपि सामान्ये वस्त्वाकारे ज्ञानग्राह्यविशिष्टार्थाकारस्याभावादनाकारतेह प्रोच्यत इत्यदोष, अत पञ्च ज्ञानानि त्रीणि चाज्ञानानि, एतत्सर्वं साकारोपयोग इत्यष्टप्रकारोऽसौ, चक्षुर्दर्शनादीनि तु चत्वारि दर्शनान्यनाकारोपयोग इत्येवं चतुर्द्धा सिद्ध इति स्थितं, 'सव्वे तल्लक्खणा जीव'त्ति ते अनन्तरोक्ता द्वादशाप्युपयोगा लक्षण-जीवत्वपरिज्ञानोपायो येषा सामान्येन सर्वजीवाना ते तल्लक्षणा सर्वेऽपि जीवा, सामान्येन च जीवाना द्वादशाप्युपयोगा एते लक्षणत्वे-नोच्यन्ते, विशेषजिज्ञासायां त्वेकद्वित्रीन्द्रियाणा मत्यज्ञानश्रुताज्ञानाचक्षुर्दर्शनरूपास्त्रय एवोपयोगलक्षणत्वेनावगन्तव्या:, चतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणा तु त्रय एत एव चतुर्थस्तु चक्षुर्दर्शनोपयोगो लभ्यते, सञ्ज्ञिपञ्चेन्द्रियाणा तु मनुष्यादीना नानाजीवानाश्रित्य द्वादशाप्येते उपयोगा प्राप्यन्ते, एकैकस्य तु सञ्ज्ञिपञ्चेन्द्रियस्य यावंत उपयोगा लभ्यन्ते तावन्त स्वधिया भावनीया, तदेवमुक्तस्वरूपैर्द्वादशभिरुपयोगैरजीवेभ्यो व्यावृत्ता जीवा लक्ष्यन्त इति तल्लक्षणा जीवा उच्यन्ते, न त्व जीवा तेषु यथोक्तोपयोगाभावादिति भाव, यच्चान्यत्रोक्त 'उपयोगलक्षणो जीव' (तत्वा० अ० २ सू० उपयोगो लक्षणं) इति तज्जीवत्वसामान्यमुपयोगसामान्य चाश्रित्येति भावनीयं, जीवत्वसावस्योपयोगमात्रेण सह कदाचिदपि व्यभिचाराभावादुपयोगो जीवस्य लक्षणमिति भाव इति गाथार्थ: ॥ ७३ ॥ अथ प्रस्तुतोपसं-हारार्थं प्रासङ्गिकस्य तु विवक्षितस्य प्रस्तावनारचनार्थं चाह—

एवं जीवसमासा बहुभेया वन्निया समासेण। एवमिह भावरहिया ।विदव्वा उ विन्नेया ॥ ८४ ॥

"एव" पूर्वोक्तप्रकारेण 'जीवसमासा' समस्तजीवराशिसङ्ग्राहका जीवसङ्क्षेपा 'वर्णिता' भणि , कथम्भूता ? इत्याह—मिथ्यादृष्टिसास्वादनादिप्रकारेण प्रसङ्गोक्तैकेन्द्रियद्वीन्द्रियादिप्रकारेण वा गत्यादिमार्गणाद्वारभेदेन वा बहवो भेदा येषा ते बहुभेदा, यथोक्तैर्बहुभिर्भेदै प्रतिपादिता इत्यर्थ, 'समासेन' सङ्क्षेपेण, तद्विस्तरस्य-

समयसमुद्रगम्यत्वादिति । आह—ननु यदि जीवसमासा यथोक्तस्वरूपा भवन्ति तर्ह्यजीवा कथम्भूता किंलक्षणाश्च भवन्ति? इति कथ्यतां, विपक्षस्वरूपे हि कथिते तद्व्यावृत्त प्रस्तुतोऽर्थः सुखावसेयो भवतीत्याशङ्क्य जीवसमासेषु प्रस्तुतेष्वपि तद्विपक्षतयाऽऽसन्नभूतानजीवानपि प्रसङ्गतः प्रतिपादयितुं प्रस्तावनागमाह—'**एवमिहे**'त्यादि, यथा पूर्वोक्तस्वरूपाणि जीवद्रव्याणि ज्ञातानि तुशब्दस्यापिशब्दार्थत्वादेवमजीवद्रव्याण्यपि 'इह' अस्मिँल्लोके विज्ञेयानीति सम्बन्धः, तैरपि ज्ञातैरत्रैव ग्रन्थे पुरस्तादन्यत्र च प्रयोजनसिद्धिसद्भावादिति भावः, कथम्भूतानि पुनरजीवद्रव्याणि विज्ञेयानि? इत्याह—'**भावरहिय**' त्ति भावा—अनन्तरोक्तद्वादशोपयोगलक्षणा जीवपर्यायास्तैर्भावै रहितान्यजीवद्रव्याणि प्रतिपत्तव्यानीति गाथार्थः ॥ ८८ ॥ कानि पुनस्तानि इति विनेयवचनमाशङ्क्य मूर्तामूर्तभेदभिन्नान्यजीवद्रव्याण्येवाभिधित्सुराह—

**ते उण धम्माधम्मा आगास अरूविणो तहा कालो । खंधा देस पएसा अणुत्तिऽविय पोग्गला रूवी ॥ ८९ ॥**

'**ते उण**' त्ति यान्यनन्तरगाथायामजीवद्रव्याणि विज्ञेयत्वेनोपदिष्टानि तानि पुनः रूप्यरूपिभेदतो द्विधा भवन्तीति शेषः, तत्रारूपीणि—अमूर्तानि, कानि पुनस्तानि? इत्याह—'**धम्माधम्मा आगास**' त्ति धर्मास्तिकायाधर्मास्तिकायाकाशास्तिकाया इत्यर्थः, तथा कालश्चेत्येतानि चत्वार्यजीवद्रव्याण्यमूर्तानि ज्ञातव्यानि, तत्र जीवपुद्गलानां स्वत एव क्रियापरिणतानां तत्स्वभावोपष्टम्भद्वारेण धरणाद्धर्मः अस्तयः—प्रदेशास्तेषां कायः—सङ्घातोऽस्तिकायः धर्मश्चासावस्तिकायश्चेति समासः, सकललोकव्यापी असङ्ख्येयप्रदेशात्मको द्रव्यविशेष इत्यर्थः, जीवपुद्गलानामेव तथैव गतिपरिणतानां तत्स्वभावाधरणादधर्मः, जीवपुद्गलानां स्थित्युपष्टम्भकारक इत्यर्थः, शेषं धर्मास्तिकायवत्सर्वमिति, सर्ववस्त्वाकाशनादाकाशं, किमुक्तं भवति?—आ—मर्यादया यत्संयोगेऽपि स्वकीयस्वकीयस्वरूपेऽवस्थानतः सर्वथा तत्स्वरूपत्वाप्राप्तिलक्षणया काशन्ते-स्वभावलाभेनावस्थितिकरणेन च दीप्यन्ते पदार्थसार्था यत्र तदाकाशमिति, अथवा आ—अभिविधिना सर्वात्मना तत्संयोगानुभवनलक्षणेन काशन्ते—तथैव दीप्यन्ते पदार्था यत्र तदाकाशं तच्च तदस्तिकायश्चेत्याकाशास्तिकायः, लोकालोकव्यापी अनन्तप्रदेशात्मको द्रव्यविशेष इत्यर्थः, कलनं—समस्तवस्तुस्तोमस्य सङ्ख्यानमिति कालः अथवा कलयन्ति—समयोऽस्यानेन रूपेणोत्पन्नस्यावलिकामुहूर्तादि चेत्यादिप्रकारेण सर्वमपि सचेतनाचेतनं वस्त्ववगच्छन्ति केवल्यादयोऽनेनेति कालः—समयावलिकादिरूपो द्रव्यविशेषः,

॥ ८५ ॥

अथवा एता एव समयावलिकादिकाः कलाः—कालाशस्तासिर्निवृत्तस्तासां वा समूह इति काल.—समयावलिकादिरूप एव, अथ यथा धर्म्मास्तिकाय इत्युक्तं तथा कालास्तिकाय इति कस्मान्नोच्यते? इति चेत्, नैव, प्रदेशबहुत्व एव तदुपपत्ते, अत्र च तन्नास्ति, अतीतानागतसमयाना विनष्टानुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्त्तमानसमयलक्षणस्यैकस्यैव प्रदेशस्य सद्भावादिति, यद्येवमावलिकामुहूर्त्तदिवसादिप्ररूपणाया अभ्यभावप्रसङ्ग प्राप्नोति, आवलिकादीनामन्यमट्ट्येयसमयात्मकत्वेन प्रदेशबहुत्व एवोपपत्ते ?, सत्यमेतत्, केवल स्थिरस्थूरकालत्रयवर्त्तिवस्त्वभ्युपगमपरव्यवहारनयमतमाश्रित्यावलिकादिकालः प्ररूप्यते, निश्चयनयस्तु मन्यते-न धर्म्मास्तिकायादौ प्रदेशराशिरिवावलिकादाववस्थित समयराशिरस्ति, अतीतानागताना विनष्टानुत्पन्नत्वेन वर्तमानसमयमात्रस्यैव सत्वादिति न वास्तवा आवलिकादयो, नापि कालेऽस्तिकायतेति, अत एव कालोऽन्यत्र वर्तमानसमयमात्रतयैव निर्धार्य्य प्रोक्तो न सामान्येन, यदाह—"कइ ण भते ! दव्वा पन्नत्ता ? गोयमा ! छ दव्वा पन्नत्ता, तजहा—धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए अद्धासमए" इत्यल विस्तरेण, तदेवमेतानि धर्म्मास्तिकायादीनि चत्वार्यजीवद्रव्याणि 'अरूवीणि' अमूर्त्तानि ज्ञातव्यानि, पुद्गलाश्च तेऽस्तिकायाश्चेति पुद्गलास्तिकाय इति योऽन्यवोक्त स स्कन्धदेशप्रदेशपरमाणुभेदात् चतुर्द्धा भवति स्पष्टाश्चैत्यत आह--'ख ग देसे' त्यादि, तत्र स्कन्धा --अनन्तानन्तपरमाणुप्रचयरूपा मासचक्षुर्ग्राह्याः स्तम्भकुम्भादयस्तदग्राह्या अचित्तमहास्कन्धादयोऽपि, देशास्तु तेषामेवार्द्धत्रिभागादिरूपा अवयवा, प्रदेशास्तु देशानामपि सूक्ष्मशकलस्वरूपा अवयवा एव, 'अणुत्तिऽवि य' त्ति अणुरित्यपि च, निरंशैकपरमाणुरपि चेत्यर्थ, जातिनिर्देशश्चायं व्यक्तिपक्षे त्वणवोऽपि चेति द्रष्टव्य, विसकलितैकैकपरमाणूनामपि पुद्गलास्तिकायेऽनन्तानतत्वानुपपत्तेः, तदेते स्कन्धदेशप्रदेशपरमाणुरूपाश्चतुर्व्विधा अपि पुद्गला. पुद्गलास्तिकाया अजीवद्रव्यलक्षणा रूपिणो मूर्त्ता एव ज्ञातव्या, पूरणगलनधर्म्मकत्वाच्चैते पुद्गला उच्यन्ते, एते हि कुतश्चिद् द्रव्याद्गलन्ति वियुज्यन्ते किञ्चित्तु द्रव्य स्वसंयोगत. पूरयन्ति—पुष्ट कुर्व्वन्ति, तदेवमेतानि धर्म्मास्तिकायादीनि पञ्चापि मूर्त्तामूर्त्तस्वरूपाण्यजीवद्रव्याणि ज्ञातव्यानीति गाथार्थः ॥ ८५ ॥ आह—ननु जीवद्रव्यस्योपयोगो ज्ञानसुखमनन्तदर्शनादिश्च सता प्रतिपद्यामहे, धर्म्मास्तिकायादीना त्वजीवद्रव्याणा किं लक्षणं यत्समीक्ष्य तत्सत्तां प्रतीम ? इत्याशङ्क्याह—

गइठाणवगाहणलक्खणाणि कमसो य वत्तणगुणो य । रूवरसगंधफासाइ कारणं कम्मबंधस्स ॥ ८६ ॥

लक्ष्यन्ते—चिह्न्यन्ते सत्त्वेनावगम्यन्ते वस्तूनि यैस्तानि लक्षणानि, गतिस्थित्यवगाहना एव लक्षणानि धर्म्माधर्म्माकाशास्तिकायाना 'क्रमशः' क्रमेण, तत्र जीवपुद्गलाना देशाद् देशान्तरप्राप्तिस्वरूप गमनं गति सा लक्षण धर्म्मास्तिकायस्य, चलननिवृत्तिस्वरूपा स्थितिः स्थान, तल्लक्षणमधर्म्मास्तिकायस्य, अवगाहनमवगाहना-तेषामेव गतिस्थितिपरिणताना जीवपुद्गलानामवकाशदातृता आश्रयत्वभवननपरिणति, आधारताप्रतिपत्तिरिति तात्पर्य, सा लक्षणमाकाशास्तिकायस्य, इदमुक्त भवति-जीवपुद्गलसम्बन्धिगतिस्थित्यन्यथाऽनुपपत्तेर्द्धर्माधर्मास्तिकाययो· सत्त्व प्रतीयत इति तयोर्गतिस्थिती तावल्लक्षण भवत, नच वक्तव्य-तद्गतिस्थिती च प्रवर्त्तेते धर्म्माधर्म्मास्तिकायौ च न भविष्यत इति कोऽत्र प्रतिबन्ध ? इति, तावन्तरेणापि तद्भवनेऽलोकेऽपि तत्प्रसङ्गादिति, यदि त्वलोकेऽपि तद्गतिस्थिती स्याता तदाऽलोकस्यानन्तत्वाल्लोकान्निर्गत्य जीवपुद्गलाना तत्रापि प्रवेशादेकद्वित्रादिजीवपुद्गलयुक्तः सर्वथा तच्छून्यो वा कदाचिल्लोक स्यात्, न चैतद् दृष्टमिष्ट वा, तस्माल्लोक एव जीवपुद्गलाना गतिस्थिती अभ्युपगन्तव्ये, ते चालोकेऽभवन्त्यौ लोक एव च भवन्त्यौ स्वनिबन्धनभूतौ धर्म्माधर्म्मास्तिकायौ लोके सत्त्वनावस्थापयत इति तल्लक्षण ते भवत एवेति स्थितम् आकाशमपि जीवपुद्गलानामाधारप्रतिपत्तिस्वरूपयाऽवगाहनया लक्ष्यते—अस्तित्वेन गम्यत इति सा तस्य लक्षण भवति, यदि हि जीवपुद्गलानामाधारभूतमाकाश न स्यात्तदा धर्म्माधर्म्मास्तिकायोपष्टम्भिता गतिस्थितिपरिणता अप्यमी क्व वर्तेरन् ? इति भाव, न हि गतिस्थितिपरिणता अपि द्रव्यत्वादय पृथिव्याद्याधारमन्तरेण वर्त्तितु शक्नुवन्ति, न च वक्तव्य गतिस्थिती अपि तेषा तर्हि आकाशावष्टम्भेनेव प्रवर्त्तिष्येते, किमन्तर्गडुकल्पाभ्या धर्म्माधर्म्मास्तिकायाभ्यामिति ?, आकाशस्यालोकेऽपि सत्त्वात् तत्रापि तद्गतिस्थितिप्रसङ्गात, तत्प्रसङ्गे च दूषणस्योक्तत्वादिति, तर्हि धर्म्माधर्म्मास्तिकायावेव जीवाद्याधारत्वेनाप्यभ्युपगम्येता किमप्रमाणकाकाशकल्पनयेति चेत् तदयुक्त, आकाशस्येव तच्छक्तिसम्पन्नत्वात, धर्म्माधर्म्मयोस्तु गतिस्थित्युपष्टम्भकत्वमात्र एव सामर्थ्यात्, नचान्यसाध्या क्रियामन्य करोति, अतिप्रसङ्गात्, दहनसाध्यस्य दाहपाकादेर्जलादेरपि भावात्, किमित्यस्यैवंभूता शक्तिरस्ति न पुनरन्यस्येति, अय च पर्यनुयोगोऽज्ञतामेव सूचयति, ज्वलनजलादावपि सर्वत्रैतत्प्रश्नस्य प्रसङ्गात्, न च युक्त्याऽऽगमलोक-

॥ ८७ ॥

प्रसिद्ध्या प्रतिप्राणिप्रसिद्धस्य नभसोऽप्रमाणकता वक्तुमुचिता, नाप्यतीन्द्रियेष्वर्थेष्वेकान्तता युक्त्यन्वेषणपरैर्भाव्यं, यदाह—"आगमश्चोपपत्तिश्च, सम्पूर्णं दृष्टिकारणम्। अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ॥ १ ॥" तस्माज्जीवपुद्गलावकाशहेतुतास्वरूपया अवगाहनया नभो लक्ष्यत इति सा तस्य लक्षणं भवति, तेन २ नवपुराणादिभावेन प्रतिनियतफलकुसुमप्रदानादिभावेन वा परिणमनं वर्त्तनं वर्त्तना सैव साध्यत्वेन गुणो यस्य कालस्य स वर्त्तनागुणः कालो बोद्धव्यः, इदमुक्तं भवति—यथोक्तस्वरूपा वर्त्तना कालेनैव साध्यते अतः सा तस्य गुण उच्यते, लक्षणं च तस्य सा भवति, तया कालस्य लक्ष्यमाणत्वात्, तथाहि-अस्तीह जगति कालः, स्तम्भकुम्भादिवस्तूनां नवपुराणादिपरिणतिलक्षणाया वकुलाशोकसहकारचम्पकादीनां प्रतिनियतसमयनियमेन पुष्पफलादिप्रदानलक्षणायाश्च वर्त्तनायास्तमन्तरेणानुपपत्तेः, सत्स्वपि हि तेषु वृक्षादिद्रव्येषु सत्यपि च तत्र ग्रामनगरादिके क्षेत्रे प्रतिनियते वसन्तादिकाल एव वृक्षादीनां पुष्पफलप्रदानादिका वर्त्तना दृश्यते, यदि स्वभावादेवेयमिष्यते तदा नित्यं सत्त्वमसत्त्वं वा प्रसज्येत, नियामकसद्भाव एव भावानां काचित्कत्वसम्भवात्, यश्चान्यो नियामकः स काल एवेति प्रतिपत्तव्यम्, अत्र च बहु वक्तव्यं तत्तु नोच्यते ग्रन्थप्रपञ्चभयादन्यत्रोक्तत्वाच्चेति, तस्मादुक्तन्यायेन वर्त्तनया कालस्य लक्ष्यमाणत्वात्तस्यासौ लक्षणं भवति, अथ पुद्गलास्तिकायस्य लक्षणमभिधित्सुराह—'रूवरसे' त्यादि, रूपरसगन्धस्पर्शा यथासङ्ख्यं नयनरसनघ्राणस्पर्शनेन्द्रियग्राह्या गुणविशेषास्ते आदिर्येषां संस्थानसंहननादीनां ते रूपरसगन्धस्पर्शादयस्तेषां कारणं—हेतुर्निबन्धनं रूपरसगन्धस्पर्शादिकारणं, पुद्गलास्तिकाय इति प्रक्रमाद्गम्यते, न केवलं रूपरसादीनां पुद्गलाः कारणं, किन्तु सोत्तरभेदज्ञानावरणाद्यष्टप्रकारकर्म्मबन्धस्य च त एव कारणमिति कारणशब्दो डमरुकमणिन्यायेनात्रापि सम्बध्यते, यथा हि स्थासकोशकपालकुम्भशरावादिरचनादिरूपेण परिणमन्ती मृत्तेषां परिणामि कारणं भवति तथा पुद्गला अपि रूपरसगन्धस्पर्शादिभावेनाष्टप्रकारकर्म्मबन्धरूपेण च परिणमन्तस्तेषां परिणामि कारणं भवतीति सुप्रतीतमेवेदम्, एवं च पुद्गलानां कारणत्वं रूपरसगन्धस्पर्शादीनां कर्म्मपरिणामस्य च कार्यत्वमादर्शयता ते रूपादयः कर्म्मपरिणामश्च पुद्गलानां लक्षणत्वेन सामर्थ्यादुक्ता वेदितव्याः, परस्परमाणव एव प्रतिप्राणिप्रतीतैः रूपादिभिरगृह्यमाणैः अन्यथानुपपत्तिसिद्धेन च कर्म्मबन्धेन स्वकारणभूतस्य पुद्गलास्तिकायस्य लक्ष्यमाणत्वाद्दहनधूमादाविवेति गाथार्थः ॥ ७६ ॥ तदेवं जीवसमासप्ररूपणाप्रसङ्गायातानि प्ररूपितानि सलक्षणान्यजीवद्रव्याण्यपि, तत्प्ररूपणाच्च सप्रसङ्गमपि

॥ ८८ ॥

सत्पदप्ररूपणाद्वार समाप्तमिति । अथ 'संतपयपरूवणया दव्वपमाणं चे' त्यादिगाथोपन्यस्त क्रमप्राप्त द्वितीय द्रव्यप्रमाणद्वारमभिधित्सु प्रमाणस्य तावत्स्वरूप निरूपयितुमाह—

**दव्वे खेत्ते काले भावे य चउव्विहं पमाणं तु । दव्व पएसविभागं पएसमेगाइयमणंतं ॥ ८७ ॥**

प्रमीयते-धान्यादि परिच्छिद्यतेऽनेनेति प्रमाणम्-असतिप्रसृत्यादि, अथवेद चेद च स्वरूपमस्य भवतीत्येवप्रतिनियतस्वरूपतया प्रत्येक प्रमीयन्ते-परिच्छिद्यन्ते यत्तत्प्रमाण यथोक्तमेव, यदिवा धान्यादेरेव प्रमिति—परिच्छेद स्वरूपावगमः प्रमाणम्, अत्र पक्षेऽसतिप्रसृत्यादेस्तद्धेतुत्वात्प्रमाणता, तच्च प्रमाण द्रव्यादिप्रमेयवशाच्चतुर्विधं भवतीत्येतदेवाह—'चउव्विहं पमाणं तु' त्ति 'तुः' पुनरर्थ, प्रमाण पुनश्चतुर्द्धा, तद्यथा-'दव्वे' इत्यादि, सूचामात्रत्वात् सूत्रस्य द्रव्यविषय प्रमाण द्रव्यप्रमाण क्षेत्रविषय प्रमाण क्षेत्रप्रमाणं एव कालप्रमाण भावप्रमाण चेति, तत्र 'दव्व' त्ति द्रव्यप्रमाण द्विधा भवति, तदेव द्वैविध्यमाह—'पएसविभागं' ति प्रदेशनिष्पन्न विभागनिष्पन्न चेत्यर्थः, तत्र 'पएस' त्ति प्रकृष्टा निर्विभागा निरंशा देशा प्रदेशा परमाणव इत्यर्थस्तै प्रदेशैर्निष्पन्नमनेकविध भवति, तदेवाह—'एगाइयमणंतं' ति एकं परमाणुमादौ कृत्वा अनन्तमित्यनन्तप्रदेशनिष्पन्नस्कन्धपर्यन्त सर्वमपि प्रदेशनिष्पन्न द्रव्यप्रमाणमुच्यत इत्यर्थ, तत्र परमाणुरेकप्रदेशस्वरूप द्रव्यप्रमाण द्व्यणुकस्तु स्कन्ध प्रदेशद्वयनिष्पन्न द्रव्यप्रमाण त्र्यणुकस्तु स्कन्ध प्रदेशत्रयनिष्पन्न द्रव्यप्रमाण यावदनन्ताणुक स्कन्धोऽनन्तप्रदेशनिष्पन्न द्रव्यप्रमाणमभिधीयते, आह—नन्विदं परमाण्वादिकमनन्ताणुस्कन्धपर्यन्त द्रव्यमेव तस्य च प्रमेयत्वात्कथ प्रमाणता युज्यत इति, नेतदेव, प्रमेयस्यापि द्रव्यादे प्रमाणताया रूढत्वात्, तथाहि—प्रस्थकादिप्रमाणेन मित्वा पुञ्जीकृत धान्यादि द्रव्यमालोक्य लोके वक्तारो भवन्ति-प्रस्थकादिरयं पुञ्जीकृतस्तिष्ठतीति, ततश्चैकद्वित्रिचतुरादिप्रदेशनिष्पन्नत्वलक्षणेन स्वस्वरूपेणैव प्रमीयमाणत्वात्परमाण्वादिद्रव्यस्यापि कर्मसाधनप्रमाणशब्दवाच्यताऽदुष्टैव, करणसाधनपक्षे त्वेकद्वित्र्यादिप्रदेशनिष्पन्नत्वलक्षण स्वरूपमेव मुख्यतया प्रमाणमुच्यते, द्रव्य तु तत्स्वरूपयोगादुपचारत इति, भावसाधनतायां प्रमिति प्रमाण, प्रमाणस्य प्रमेयाधीनत्वात्प्रमाणप्रमेययोर्द्वयोरप्युपचारात्प्रमाणताऽतोऽत्रापि पक्षे परमाण्वादिद्रव्यस्योपचारात्प्रमाणताऽविरुद्धैवेति गाथार्थ ॥ ८७ ॥ इद चोक्तस्वरूप द्रव्य यथोत्तरमन्यान्यसङ्ख्योपेते स्वगतैरेव प्रदेशैर्निष्पन्नत्वात्प्रदेशनिष्पन्न प्रमाणमुक्तं, द्वितीं

तु स्वगतप्रदेशान् विहायापरा विविधो विशिष्टो वा भागो—भङ्गो विकल्प प्रकार इतियावत् तेन निष्पन्नं विभागनिष्पन्नं, तच्चाधिकृत्याह—

**माणुम्माणपमाणं पडिमाणं गणियमेव य विभाग । -पत्थकुडवाइ धन्ने चउभागविवड्ढियं च रसे ॥ ८८ ॥**

विभागनिष्पन्नं प्रमाणं पञ्चधा भवति, तद्यथा—मानमुन्मानमवमानं प्रतिमानं गणिम चेति, तत्र मानलक्षणं प्रमाणं पुनरपि द्विधा-धान्यमानप्रमाणं रसमानप्रमाणं च, तत्र मीयतेऽनेनेति मानं तच्च तत्प्रमाणं चेति मानप्रमाणं धान्यविषयं मानप्रमाणं धान्यमानप्रमाणं, तच्च मगधदेशप्रसिद्धं सिद्धान्ते 'दो असईओ पसई' त्यादिनाऽसत्यादिकं प्रतिपादितं, तथाहि-प्रसृते-तत्प्रभवत्वेन समस्तधान्यमानानि व्याप्नोतीत्यशति अवाङ्मुखहस्त तलरूपा तत्परिच्छिन्नं धान्यमपि तथोच्यते, तद्द्वयेन च निष्पन्ना नावाकारताव्यवस्थापितप्राञ्जलकरतलरूपा प्रसृति, द्वे च प्रसृती सेतिका, सा च नेह प्रसिद्धा गृह्यते, मागधमानस्यैव प्रतिपिपादयिषितत्वाद्, अत इयं मगधाजनपदप्रसिद्धा काचिदवगन्तव्या, चतस्र सेतिका कुडव, ते चत्वार प्रस्थ अमी चत्वार आढकस्त चत्वारा द्रोण षष्ट्या आढकाना जघन्य कुम्भ अशीत्याऽऽढकाना मध्यम कुम्भः शतेनाढकानामुत्कृष्ट कुम्भ अष्टभिराढकशतैर्वाह, अनेन धान्यमानप्रमाणेन मगधादेशे व्रीह्यादिधान्यानि मीयन्ते, अत्र च सूत्रे 'पत्थकुडवाइ धन्ने' इति ब्रुवता प्रस्थकुडवलक्षण धान्यमान साक्षादुपात्त, शेष त्वसतिप्रसृत्याढकादिकमादिशब्दाद् गृहीत, रसमानपमाणस्वरूपमाह—'**चउभागविवड्ढियं च रसे**' त्ति रसो-घृततैलादिस्तद्विषयं मानं धान्यमानात् सेतिकादे सकाशाच्चतुर्भागविवर्द्धितं-चतुर्थांशेनाभ्यधिकं भवति, धान्यस्य ह्यग्रतरूपत्वाच्छिखा संभवति रसस्य तु द्रवात्मकत्वान्न तत्सम्भव, अतो धान्यमानादभ्यधिकचतुर्थांशलक्षणयाऽन्त शिखया युक्तं किलैतद्विधीयते, धान्यमानं त्वितरापेक्षया हीनचतुर्भागलक्षणया बहि शिखया समन्वितं भवति, अतो रसमानमन्त शिखं धान्यमानं तु बहि शिखमित्येवं सामर्थ्याद् द्वितयमपि तुल्यं भवति, तत्र रसमानमागमे—'चउपलमाणा चउसट्ठिये' त्यादिना चतु षष्ट्यादिकमुक्तं, तथाहि षट्पञ्चाशदधिकपलशतद्वयमानं माणिकानामकं रसमानमिह सर्वोपरि वक्ष्यते, तस्य चतु षष्टितमभागनिष्पन्नत्वात्सान्वर्थं चतुष्षष्टिकानामप्रथमं रसमानम्. इयं च सामर्थ्यादेव चतुष्पलमाना द्रष्टव्या, तथा तस्या एव माणिकाया द्वात्रिंशत्तमभागवर्तित्वादष्टपलप्रमाणा द्वात्रिंशिका, तथा माणिकाया एव षोडशभागवर्तित्वात्षोडशपलप्रमाणा षोडशिका, तस्या

॥ ९० ॥

एव चाष्टमभागवर्त्तित्वाद् द्वात्रिंशत्पलपरिमाणाऽष्टभागिका, तस्या एव चतुर्थांशवर्त्तित्वाच्चतुःषष्टिपलप्रमाणा चतुर्भागिका, तस्या एवार्द्धभागवर्त्तिनी अष्टाविंशत्यधिकपलशतमानाऽर्द्धमाणिका, षट्पञ्चाशदधिकपलशतद्वयप्रमाणा तु माणिका, अनेन सर्व्वेणापि रसमानेन मगधादेश एव घृततैलादीनि मीयन्ते, एतच्च रसमानं सूत्रकृता नामग्राहं न प्रतिपादितं, सद्द्विसरुचिसत्त्वानुग्रहमात्रफलत्वादस्य सूत्रस्येति गाथार्थ ॥ ८८ ॥ तदेवं धान्यमानरसमानलक्षणभेदद्वययुक्तमपि प्रतिपादितं मानरूपं द्रव्यप्रमाणमथोन्मानादिद्रव्यप्रमाणस्वरूपनिर्णयार्थमाह—

**कंसाइयमुम्माणं अवमाणं चेव होइ दंडाई। पडिमाणं धरिमेसु य भणियं एक्काइय गा[?] ॥ ८९ ॥**

उद्-ऊर्ध्वमुत्क्षिप्य मीयते-तोलनद्वारेण परिच्छिद्यते कांस्यादिकमनेनेत्युन्मानं—कार्षिकतुलादिकं, केषु पुनर्द्रव्येषु विषये व्याप्रियमाणमिदं द्रव्यप्रमाणमन्वेषणीयत ? इत्याह—'**कंसाइय**' मिति सुव्यत्ययात्कांस्यादिष्वित्यर्थ, तत्र कांस्यं प्रतीतं आदिशब्दात्ताम्रलोहकर्प्पासगुडखण्डादे परिग्रह, एषामनेनात्मीयमानत्वादत-द्विषयमिदमित्यर्थ, इदं चागमे 'अद्धकरिसो करिसो' इत्यादिनाऽर्द्धकर्षादिकं भारपर्यन्तमुक्तं, तत्र पलस्याष्टमो भागोऽर्द्धकर्षस्तस्यैव चतुर्थांश कर्षस्तदर्द्ध त्वर्द्धपलं द्वे अर्द्धपले पलं पञ्चोत्तरपलशतमाना तुला दशभिस्तुलाभिरर्द्धभारो विंशतितुलाभिर्भार इत्येतैर्मगधादेशे कांस्याद्युन्मीयत इति सर्व्वमिदमुन्मानमुच्यते, ननु यद्यवमागमेऽर्द्धकर्षादि-कमुन्मानमुच्यते तर्हि कथमिह कार्षिकतुलादिकमित्युक्तं ? सत्यं, किन्त्वर्द्धकर्षादिपरिज्ञानोपायत्वादुपचारतस्तदपि तथोच्यत इत्यदोष । उक्तमुन्मानं अथावमानस्वरूपमाह-अवमीयते-प्रमाणविशिष्टं भूम्यादिवस्त्ववगम्यतेऽनेनेत्यवमानं तत्पुनर्दण्डादिकमेव भवति, आदिशब्दात् हस्तधनुर्युगरज्ज्वादिपरिग्रह, एषां च हस्तदण्डधनुर्युगादीनां विशेषत स्वरूपमुत्तरगाथाया वक्ष्याम । अथ प्रतिमानमाह—'**पडिमाण**' मित्यादि, मीयते—परिच्छिद्यतेऽनेनेति मानं मेयस्य—सुवर्णादे प्रतिरूपं द्वितीयपक्षं प्रतियोगित्वेन प्रति-तुल्यं-प्रतिसदृशं मानं प्रतिमानं—गुञ्जाकाकण्यादि, एतदपि सिद्धान्ते "गुञ्जा कागणी निप्फावो" इत्यादिना बहुभेदमभिहितं, तत्र गुञ्जा-'चिणोट्ठिय' त्ति प्रतीतैव १ सपादगुञ्जा तु काकणी २ सत्रिभागकाकण्या त्रिभागोनगुञ्जाद्वयेन विनिर्वृत्तो निष्पावो-वल्ल ३ त्रयो निष्पावा कर्म्ममाषक ४ द्वादश कर्म्ममाषका एको मण्डलक ५

॥ ६१ ॥

षोडश कर्म्ममाषका एकः सुवर्णः ६, एतत्सर्वं प्रतिमानमुच्यते, केषु द्रव्येषु पुनः परिच्छेदकत्वेन प्रवर्त्तमानमेतद् द्रव्यप्रमाणभेदानां मध्येऽभिधीयते ? इत्याह भ्रियन्ते—प्रमाणपरिज्ञानाय नाराचे व्यवस्थाप्यते यानि तानि वरिकाणि-सुवर्णरजतमुक्ताफलादीनि तेषु विषये परिच्छेदकत्वेन प्रवर्त्तमानत्वात्प्रतिमानरूपं द्रव्यप्रमाणमुच्यते, गण्यते -सङ्ख्यायते वस्त्वनेनेति गणिमं गणितं वा, तत्पुनरेकद्वित्र्यादिशीर्षप्रहेलिकापर्यन्तमिहैव वक्ष्यमाणस्वरूपमिति गाथार्थः ॥ ८९ ॥ अथोक्तस्यैवावमानस्य स्वरूपं किञ्चिद् विशेषिततरमाह—

दंडधणूजुगनालिय अक्खो मुसलं च होइ चउहत्थं । दसनालियं च रज्जुं वियाण अवमाणसण्णाए ॥ ९० ॥

इहावमानं समयसागरे 'हत्थेण वा दण्डेण वा' इत्यादिवचनेन हस्तदण्डधनुरादिकमुक्तं, अत्र च हस्तः कुतश्चित्कारणात्सूत्रकृता यद्यपि नोक्तस्तथाप्युपलक्षणव्याख्यानाद् द्रष्टव्यः, स चेहैव वक्ष्यमाणस्वरूपोत्सेधाङ्गुलेन चतुर्विंशत्यङ्गुलमानो बोद्धव्यः, तेन च हस्तेन प्रत्येकं चतुर्हस्तप्रमाणा एते दण्डधनुर्युगनालिकाक्षमुशलनामानः षड् मानविशेषा भवन्ति, एतांश्च षडप्यवमानसञ्ज्ञया विजानीहीति सम्बन्धः, एषु च मध्ये नालिका-यष्टिविशेषरूपा प्रज्ञा -धूः शेषाः प्रतीतार्थाः, तथा दशनालिकाप्रमाणां चत्वारिंशद्धस्तमानामित्यर्थः रज्जुं च मानविशेषरूपमवमानसञ्ज्ञया विजानीहि, आह ननु यदि दण्डादयः सर्वेऽपि प्रत्येकं चतुर्हस्तप्रमाणा एव न न्यूनाधिकमानास्तदा कर्नैव दण्डाद्यन्यतरोपादानेन सिद्ध्यति, किं शेषोपादानेन ?, सत्यं, किन्तु वास्तुभूम्यादिके मेयवस्तुनि लोकरूढिवशादेतेषां समानप्रमाणानामपि भेदेन व्यापियमाणत्वात्सर्वेषामुपादानं, लोके हि वास्तुभूम्यादिकं हस्तेनैव मीयते, कृषिकर्म्मादिविषयभूतं क्षेत्रं तु चतुर्हस्तवंशलक्षणेन दण्डेनैव, मार्गस्तु गव्यूतियोजनादिपरिज्ञानार्थं धनुषैव, खातं तु कूपादि नालिकयैव चतुर्हस्तप्रमाणयष्टिविशेषरूपया मीयते, एवं युगादेरपि देशादिरूढितः प्रतिनियतवस्तुव्यापारो द्रष्टव्यः उक्तञ्च- "भूमिम्मि हत्थमज्जं खेत्ते दंडे धणु च पंथम्मि । खायं च नालियाए वियाण ओमाणपरिमाणं ॥ १ ॥ इति गाथार्थः ॥ ९० ॥ उक्तं च पञ्चप्रकारमपि द्रव्यप्रमाणमथ क्षेत्रप्रमाणमभिधित्सुराह —

खेत्तपमाण दुविहं विभाग ओगाहणाए निप्फन्नं । एगपएसोगाढाइ होइ ओगाहणमणेगं ॥ ९१ ॥

